## ॥ अथ श्रीव्रतोद्यापनकौमुदीप्रारंभः ॥

# अथ व्रतोद्यापनकौमुद्या अनुक्रमणिका प्रारभ्यते ॥

इत्यनुक्रमणिकासमाप्ता ॥

॥ श्रीगणेशायनमः ॥ ॥ श्रीगोपीजनवल्लभायनमः ॥ नत्वागणेशंसंतुष्ट्यैशंकरेणवितन्यते ॥ मुदापुराणविख्यातव्रतोद्यापनकौमुदी ॥ १ ॥ तत्रतावत्सर्वव्रतोपयोगित्वात्किंचिन्निर्णयादिकंलिख्यते ॥ तत्रव्रतलक्षणम् ॥ अभियुक्तव्रतासिद्धिविषयःसंकल्पविशेषएवव्रतम् ॥ तत्रकालमाहहेमाद्रौगार्ग्यः ॥ " अस्तगेचगुरौशुक्रेबालेवृद्धेमलिम्लुचे ॥ उद्यापनमुपारंभंव्रतानांनैवकारयेत् ॥ १ ॥" लल्लः । " नीचस्थेवक्रसंस्थेप्यतिचरणगतेबालवृद्धास्तगेवा । " नीचस्थोमकरस्थः । देवीपुराणे । " सिंहसंस्थंगुरुंशुक्रंसर्वारंभेषुवर्जयेत् । " वसिष्ठः । " सिंहस्थेतुमघासंस्थंगुरुंयत्नेनवर्जयेत् । " सिंहस्थगुरुवर्जनंनर्मदोत्तरभागएव । अन्यत्रतुसिंहांशकएववर्ज्यः । मकरस्थगुरावपिसर्वंशुभकार्यंवर्ज्यम् । विशेषमाहलल्लः । " नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे । गंडक्याःपश्चिमेभागेमकरस्थोनदोषभाक् ॥ १ ॥ " अगस्त्योदयेपिव्रतानांग्रहणविसर्गौनस्तः । नियतकालानितुभवंत्येव । अगस्त्योदयकालश्चदिवोदासीये ।" उदेतियाम्यांहरिसंक्रमाद्रवेरेकाधिकेविंशतिमेह्यगस्त्यः । ससप्तमेस्तंवृषसंक्रमाच्चप्रयातिगर्गादिभिरभ्यभाणि ॥ " व्रतारंभसमाप्तितिथिंविशिनष्टि हेमाद्रौसत्यव्रतः । " उदयस्थातिथिर्याहिनभवेद्दिनमध्यभाक् । साखंडानव्रतानांस्यादारंभश्चसमापनम् ॥ १ ॥" तद्व्यतिरिक्तायामखंडायांप्रारंभश्चसमापनम् । संपूर्णांतिथिमाह । रविर्यांतिथिंसमुदेति अस्तंयातिचसासंपूर्णा तत्तद्व्रतोक्तकालव्यापिनीग्राह्यावा । व्यतीपातादिनिषिद्धयोगभद्रादुष्टवासरादिरहितातिथिःशुभकार्येग्राह्या । ब्रह्मयामले । " दिनभद्रायदारात्रौरात्रिभद्रायदादिवा । नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाः ॥ " इति ॥ अथव्रताधिकारिणः॥ स्कांदे । " निजवर्णाश्रमाचारनिरतःशुद्धमानसः । अलुब्धःसत्यवादीचसर्वभूतहितेरतः ॥ श्रद्धावान्पापभीरुश्चमदंभविवर्जितः ॥ अवेदनिंदकोधीमानधिकारी





व्रतादिषु ॥ " 'निजवर्णाश्रमाचार ' इत्यनेनचतुर्णांवर्णानामधिकारोवगम्यते ॥ अत्रस्त्रीणामपि अधिकारः। भारते " मांहिपा
स्यतुकौंतेययेपिस्युःपापयोनयः । स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिम् ॥ " इति । क्वचिन्म्लेच्छानामधिकारः। हेमाद्रौ
देवीपुराणे " ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैःस्त्रीभिर्महेश्वरः । पूजनीयोभक्तिमद्भिर्म्लेच्छैरन्यैश्चमानवैः ॥ " इति ॥ सभर्तृकाणांस्त्री
णांभर्त्राज्ञांविनानाधिकारः । तथाचमदनरत्नेमार्कंडेयपुराणे " नारीनचाननुज्ञाताभर्त्रापित्रासुतेनच । निष्फलंतुभवेत्तस्याय
त्करोतिव्रतादिकम् ॥ " इति । भर्त्राद्याज्ञयातुसर्वव्रतेष्वधिकारः । स्त्रीणांव्रतग्रहणेविशेषोहेमाद्रौहरिवंशे " स्नानंचकार्यंशिरसःस्ना
ताफलमवाप्नुयात् ॥ " इति । अभर्तृकस्त्रीणामपिव्रतादिष्वधिकारः। तदुक्तंस्कांदे " भर्तृहीनातुयानारीसंयताविजितेंद्रिया । व्रता
दीनांतुसंकल्पंदानंचस्वयमाहरेत् ॥ वैदिकंतांत्रिकंकर्मआचार्यद्वारतश्चरेत् ॥ " इति ॥ अथव्रतधर्माः॥ भारते । " गृहीत्वौदुंबरंपात्रं
वारिपूर्णमुदङ्मुखः । उपवासंतुगृह्णीयाद्यद्वासंकल्पयेद्बुधः ॥ " पात्राभावेहस्तेनापिजलंगृहीत्वासंकल्पयेदिति । अनंतरकृत्यमाह
मदनरत्नेदेवलः । " अभुक्त्वाप्रातराहारंस्नात्वाचम्यसमाहितः । सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत् ॥ " अत्रप्रातर्व्रतमाचरेदित्ये
वान्वयः । अन्येतुपूर्वेदिनेएकभुक्तंनक्तंवाकृत्वासायंसंध्योत्तरंव्रतंसंकल्पयेदित्याहुः॥ सर्वव्रतेषुसामान्यधर्माः॥ भविष्ये "क्षमासत्यंदया
दानंशौचमिंद्रियनिग्रहः । देवपूजाग्निहवनंसंतोषःस्तेयवर्जनम् । सर्वव्रतेष्वयंधर्मःसामान्योदशधास्थितः ॥ " देवलः " ब्रह्मचर्यमहिं
साचसत्यमामिषवर्जनम् । व्रतेष्वेतानिचत्वारिचरितव्यानिनित्यशः ॥ " व्रताद्यारंभेवृद्धिश्राद्धंकार्यम् । तदाहशातातपः । " एतानि

१ औदुंबरं ताम्रमयम् ।

ष्ट्वापितॄञ्छ्राद्धेकर्मकुर्यादनंतरम् " इति । गृहीतव्रताऽनाचरणेदोषमाह । " पूर्वंव्रतंगृहीत्वायोनाचरेत्काममोहितः । जीवन्भवतिचांडालोमृतश्चनरकंव्रजेत् ॥ " इति । प्रायश्चित्तमुक्तंस्कांदे " क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि । दिनत्रयंनभुंजीतमुंडनंशिरसोऽथवा ॥ प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेत् ॥ " इति । उपवासलक्षणमाहवसिष्ठः । " उपवासःसविज्ञेयःसर्वभोगविवर्जनम् ॥ " इति । निराहारउपवासः । उपवासेदंतधावनंकाष्ठेननिषिद्धम् । तदभावेद्वादशगंडूषान्कुर्यात् । तदुक्तंवसिष्ठेन । " उपवासेतथाश्राद्धेनकुर्याद्दंतधावनम् । तदभावेतुगंडूषान्कुर्याद्द्वादशचैवहि ॥ " हारीतः । " पतितपाखंड्यादिनास्तिकादिसंभाषणालोकादिकमुपवासादिषुव्रतादिकेषुवर्जयेत् " इति । पतितादेर्दर्शनेतुविष्णुपुराणे । " तस्यावलोकनात्सूर्यंपश्येत् स्पर्शात्स्नानमाचरेत् अशुतंशुचिपदंजपेत् । " याज्ञवल्क्यः " यदिवाग्यमलोपःस्याद्व्रतदानक्रियादिषु । व्याहरेद्वैष्णवंमंत्रंस्मरेद्वाविष्णुमव्ययम् ॥ " यमः । " मानसेनियमेलुप्तेस्मरेद्विष्णुमनामयम् । " इति । बृहन्नारदीये " रजस्वलांचचांडालंमहापातकिनंतथा । सूतिकांपतितंचैवउच्छिष्टंरजकादिकम् ॥ व्रतादिमध्येशृणुयाद्येषांध्वनिमुत्तमः । अष्टोत्तरसहस्रंतुजपेद्देवेदमातरम् ॥ " इति । वेदमातागायत्री । दक्षः । " संध्याहीनोऽशुचिर्नित्यमनर्हःसर्वकर्मसु । " गौडनिबंधेमार्कंडेयपुराणे " सूर्योदयंविनानैवव्रतदानादिकःक्रमः । " इति । क्रमउपक्रमः । छंदोगपरिशिष्टे । " सदोपवीतिनाभाव्यंसदाबद्धशिखेनच । " इति । मार्कंडेयपुराणे " अधोवायुसमुत्सर्गेप्रहासेत्वन्यभाषणे । मार्जारमूषकस्पर्शे आक्रुष्टेक्रोधसंभवे ॥ निमित्तेष्वेषुसर्वत्रकर्मकुर्वन्नपःस्पृशेत् । शिरःस्नातश्चकुर्वीतदैवंपित्र्यमथाह्निकम् ॥ " इति । वायुपुराणे " स्नानसंध्यातर्पणादिजपहोमामरार्चनम् । उपावासवताकार्यंसायंसंध्याहुतीर्विना ॥ " आपस्तंबः । " त्रिमात्रस्तुप्रयोक्तव्यः

कर्मारंभेषुसर्वशः । ” त्रिमात्रःप्रणवः । स्त्रीणांविशेषःपाद्मे । “ गर्भिणीसूतकादिश्चकुमारीचापिरोगिणी । यदाऽशुद्धातदान्ये
नकारयेत्प्रयतास्वयम् ॥ ” इति । पाद्मे “ पूर्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः । तत्कर्तव्यंनरैःशुद्धदेवार्चनविवर्जितम् ॥ ” इति ।
केनकारयेदित्यपेक्षायांपैठीनसिः । “ भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम् । ” इति । वायुपुराणे । “ उपवासेत्वशक्त
स्तुपुत्रादन्याच्चकारयेत् । उपवासंप्रकुर्वाणःपुण्यंशतगुणंभवेत् ॥ नारीचपतिमुद्दिश्यएकादश्यामुपोषिता । पुण्यंशतगुणंयाया
दित्याहगालवोमुनिः॥मातामहादीनुद्दिश्यएकादश्यामुपोषणे। कृतेतुतेफलंविप्राःसमग्रंफलमाप्नुयुः॥” एतेप्रतिनिधयोनकाम्ये॥मंडनः
“ काम्येप्रतिनिधिर्नास्तिनित्यनैमित्तिकेभवेत्। काम्येप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिंविदुः॥”इति।हविष्याणिकात्यायनः “हविष्येषुय
वामुख्यास्तदनुव्रीहयःस्मृताः।माषकोद्रवगौरादीन्सर्वाभावेपिवर्जयेत् ॥ ” अग्निपुराणे “ व्रीहिषाष्टिकमुद्गाश्चमठरःसलिलंपयः। श्या
माकाश्चैवनीवारागोधूमाद्याव्रतेहितः ॥ कंदःसैंधवसामुद्रेगव्येचदधिसर्पिषी । पयोनुद्धृतसारंचपनसाम्रेहरीतकी ॥ पिप्पलीजीरकंचैव
नागरंचैवतिंतिणी । कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ॥ अतैलपक्वंमुनयोहविष्याणिप्रचक्षते ॥ ” मनुः “ मुन्यन्नानिपयःसोमो
मांसंयच्चानुपस्कृतम् । अक्षारलवणंचैवप्रकृत्याहविरुच्यते ॥ ” अनुपस्कृतम्अपक्वम् ॥ उपयुक्तवस्तूनिव्रतादौलिख्यंते । आदित्य
पुराणे“सुवर्णरजतंमुक्ताराजावर्तःप्रवालकम् ” । पंचरत्नमाख्यातम् ।“ कनकंकुलिशंनीलंपद्मरागंचमौक्तिकम् । ” एतानिपंचरत्ना
नि । कुलिशंहीरकम् । स्मृत्यंतरे “ अभावेसर्वरत्नानांहेमसर्वत्रयोजयेत् । ” इति । पल्लवाब्रह्मांडपुराणे “ अश्वत्थोदुंबरप्लक्षचूतन्यग्रो
धपल्लवाः । ” पंचगव्यम् । स्कांदे “ गोमूत्रंगोमयंक्षीरंदधिसर्पिर्यथाक्रमम् ” इति । पंचामृतंशिवधर्मे “ पंचामृतंदधिक्षीरंसितामधुघृतं

नृप" इति । कात्यायनः "आज्यंक्षीरंमधुतथामधुरत्रयमुत्तमम्" इति । सर्वौषध्यः छंदोगपरिशिष्टे "कुष्ठंमांसीहरिद्रेद्वेमुराशैलेयचंदनम् । वचाचंपकमुस्तंचसर्वौषध्योदशस्मृताः ॥" इति । तत्रैव "आपःक्षीरंकुशाग्राणिदध्यक्षततिलास्तथा । यवाःसिद्धार्थकाश्चेतिह्यर्घोष्टांगःप्रकीर्तितः ॥" इति । पंचरात्रे "रजांसिपंचवर्णानिमंडलार्थेहिकारयेत् । शालितंडुलजंशुक्लंरक्तंकौसुंभसेंदुरम् ॥ हरितालोद्भवंपीतंकृष्णंदग्धयवोद्भवम् । रजांसिपंचवर्णानिहरितंपीतकृष्णयुक् ॥" इति । कौतुकसंभवानिभविष्ये । "दूर्वायवांकुराश्चैववालकंचूतपल्लवाः । हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः ॥ कंकणौषधयश्चैवकौतुकाख्योगणःस्मृतः ॥" इति । सप्तमृदोमात्स्ये । "गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् । मृदमानीयकुंभेषुप्रक्षिपेच्चत्वरादपि ॥" भविष्ये "सुवर्णंरजतंताम्रमारकूटंतथैवच । लोहंत्रपुतथासीसंधातवःसप्तकीर्तिताः ॥" इति ॥ तत्रैवसप्तधान्यानि "यवगोधूमधान्यानितिलाःकंगुस्तथैवच । श्यामाकाश्चणकाश्चैवसप्तधान्यमुदाहृतम् ॥" इति । कलशलक्षणंविष्णुधर्मे "हैमराजतताम्राश्चमृन्मयालक्षणान्विताः । पंचाशांगुलवैपुल्याउत्सेधेषोडशांगुलाः ॥ द्वादशांगुलमूलःस्युर्मुखमष्टांगुलंभवेत् ॥" इति । प्रतिमाद्रव्यंतत्प्रमाणंभविष्ये "सौवर्णीराजतीताम्रीवृक्षजामार्तिकीतथा । पिष्टजापिष्टलेपोत्थानिजवित्तानुसारतः ॥ आमाषात्पलपर्यंताकर्तव्याशाठ्यवर्जितैः । अंगुष्ठपर्वादारभ्यवितस्त्यवधिकास्मृता ॥" इति ॥ मात्स्ये "अनुक्तसंख्यायत्रस्याच्छतमष्टोत्तरंस्मृतम् । अष्टाविंशतिरष्टौवायथाशक्तिविधीयते ॥" इति ॥ ब्राह्मे "यथोक्तवस्त्वसंपत्तौग्राह्यंतदनुकारियत् । यवानामिवगोधूमाव्रीहीणामिवशालयः ॥ आज्यद्रव्यमनादेशेसर्वहोमेविधीयते ॥" इति । मंत्रदेवतायाअभावेप्रजापतिरितिस्थितिःसमस्तव्याहृतिर्मंत्रः । गारुडे "प्रणवादिनमोन्तंचचतुर्थ्यंतंचसत्तम । देवतायाःस्वकंनाम

मूलमंत्रःप्रकीर्तितः ॥ " इति । द्रव्यप्रतिनिधिरुक्तोहेमाद्रौ "दध्यलाभेपयःकार्यंमध्वलाभेतथागुडः ॥ घृतहोमेगव्यंमुख्यंतदभावेमा हिषमाज्यंचतदभावेतैलंकौसुंभंसार्षपंच ॥ " इति । कात्यायनः " अनंतर्गर्भंकंसाग्रंकौशंद्विदलमेवच । प्रादेशमात्रंविज्ञेयंपवित्रंयत्र कुत्रचित् ॥ " अथेध्मा । पलाशाश्वत्थखदिररोहितोदुम्बराणांतदभावेकंटकवर्ज्यसर्ववनस्पतीनाम् । समिद्धेऽग्नौहोतव्यम् । 'मंदाग्नावामयावीस्यात्' इत्यादिदोषदर्शनात् । " नकुर्यादग्निधमनंपाणिशूर्पादिभिःक्वचित् । मुखेनैवधमेदग्निंयतोवेदाविनिःसृताः ॥ " इति । अथधूपः भविष्ये " अगरुंचंदनंमुस्तासिह्लकंवृषणंतथा । समभागंतुकर्तव्यंधूपोयममृताह्वयः ॥ " वृषणंकस्तूरी । सुवर्णादिमानं " पंचगुंजात्मकोमाषः तेषोडशकर्षः कर्षचतुष्टयंपलम् । अन्यदपि पलद्वयंप्रसृतस्तद्द्विगुणंकुडवंतच्चतुर्गुणंप्रस्थः तच्च तुर्गुणमाढकः तच्चतुर्गुणंद्रोणः । " पलंचकुडवंप्रस्थआढकोद्रोणएवच । धान्यमानेषुवोद्धव्याः क्रमशोमीचतुर्गुणाः ॥ " धान्यमानं । द्रोणद्वयंकुंभःषोडशद्रोणाःखारीति । होमद्रव्यमानंपदार्थादर्शे " कर्षप्रमाणमाज्यंस्याच्छुक्तिमात्रंपयःस्मृतम् । उक्तानिपंचगव्या निशुक्तिमात्राणिसाधुभिः ॥ तत्समंमधुदुग्धान्नंग्रासमात्रमुदाहृतम् । दधिप्रसृतमात्रंस्याल्लाजाः स्युर्मुष्टिसंमिताः ॥ पृथुकास्तत्प्र माणाःस्युः सक्तवोपितथाविधाः । पलार्धंगुडमानंचशर्करापितथाविधा ॥ ग्रासार्द्धमात्रमन्नानामिक्षुःपर्वप्रमाणकः । एकंस्या त्पत्रपुष्पेचतथाधूपादिकल्पयेत् ॥ मातुलिंगंचतुःखंडंपनसंदशधाकृतम् । अष्टधानारिकेरंचचतुर्धाकदलीफलम् ॥ त्रिधाकृतं तथाबैल्वंकपित्थंखंडितंद्विधा । व्रीहयोमुष्टिमानाःस्युर्मुद्गामाषायवास्तथा ॥ तंडुलास्तुतदर्धंतुकोद्रवामुष्टिसंमिताः । लवणंशुक्तिमा त्रंस्यान्मरीचान्येकविंशतिः ॥ खंडत्रयंतुमूलानांफलानांस्वप्रमाणतः । अन्येषांग्रासमात्रंतुप्रसृतिःपायसस्यतु ॥ अक्षतास्तुयवाःप्रोक्ता

स्तंडुलाव्रीहयस्तथा ॥ " एषांकेषांचिद्द्रव्याणामप्यसंभवे आज्यमुपादेयम् भरद्वाजमतात् । " चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दमा
न् । फलोपसंमितानेतान्गुग्गुलंबदरास्थिवत् ॥ द्रव्यंस्रुवेणहोतव्यंपाणिनाकठिनंहविः ॥ " अथऋत्विग्वरणंपाद्मे । " बालाग्निहोत्रिणं
विप्रंसुरूपंचगुणान्वितम् । सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः ॥ पुरोहितंमुख्यतमंकृत्वान्यांश्चतथर्त्विजः । अहतांबरसंच्छन्नान्स्रग्वि
णःशुचिभूषितान् ॥ अंगुलीयकानिचतथाकर्णवेष्टान्प्रदापयेत् । वस्त्रयुग्मंतथोष्णीषंकुंडलेकंठभूषणम् ॥ एतानिचैवसर्वाणिप्रारंभेस
र्वकर्मणाम् । पुरोहितायदत्त्वाथऋत्विग्भ्यःसंप्रदापयेत् ॥ " इति । व्रतानांमधुपर्कमाहविश्वामित्रः । " संपूज्यमधुपर्केणऋत्वि
ग्भ्यःकर्मकारयेत् । अपूज्यकारयन्कर्मकिल्बिषेणैवयुज्यते ॥ " ऋत्विक्संख्यामात्स्ये । " हेमालंकारिणःकार्याःपंचविंशतिसंख्यया।
दक्षिणाचसमंसर्वानाचार्येद्विगुणंभवेत् ॥ " इति ॥ अथसर्वतोभद्रमंडलंस्कांदे । " प्रागुदीच्यायतारेखाःकुर्यादेकोनविंशतिम् ।
खंडेषुत्रिपदैःकोणेशृंखलापंचभिःपदैः ॥ एकादशपदावल्लीभद्रंतुनवभिःपदैः । चतुर्विंशत्पदावापीपरिधिर्विंशतिःपदैः ॥ मध्येषोडश
भिःकोष्ठैःपद्ममष्टदलंस्मृतम् ॥ श्वेतेन्दुःशृंखलाकृष्णावल्लीनीलेनपूरयेत् ॥ भद्रारुणासितावापीपरिधिःपीतवर्णकः ॥ बाह्यांतरदलाश्वे
ताकर्णिकापीतवर्णका ॥ परिध्यावेष्टितंपद्मंबाह्येसत्वंरजस्तमः ॥ तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरासुरान् ॥ " इतिसर्वतोभद्रम् ॥
अथाष्टलिंगतोभद्रमाग्नेये " चतुर्विंशतिरालेख्यारेखाःप्राग्दक्षिणायताः ॥ कोणेषुशृंखलाःपंचपदावल्ल्यस्तुपार्श्वतः ॥ पदैर्नवभिराले
ख्याश्चतुर्भिर्लघुशृंखलाः ॥ लघुवल्ल्यःपदैःषड्भिस्ततोष्टादशभिःपदैः ॥ कृत्वालिंगानिवाप्यःस्युस्त्रयोदशभिरंतरा ॥ ततोवीथि
द्वयेनैवपीठंकुर्याद्विचक्षणः ॥ तस्यपादाःपंचपदैर्द्वाराण्यपितथैवच ॥ एकाशीतिपदंमध्येपद्मंस्वस्तिकमुच्यते ॥ कोणेषुशृंखला:

कार्याः पदैस्त्रिभिरतः परम् ॥ पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषांसमंततः ॥ एकादशपदावल्ल्योमध्येष्टदलमालिखेत् ॥ पद्मंनवपदंह्येवंलिं
गतोभद्रमुच्यते ॥ शृंखलाःकृष्णवर्णेनवल्लीनीलेनपूरयेत् ॥ रक्तेनशृंखलालघ्वीवल्लीपीतेनपूरयेत् ॥ लिंगानिकृष्णवर्णानिश्वेतेनाप्य
थवापिकाः ॥ पीठंसपादंश्वेतेनपीतेनद्वारपूरणम् ॥ मध्येस्युःशृंखलारक्तावल्लीर्नीलेनपूरयेत् ॥ भद्राणिपीतवर्णानिपीतापंकजक
र्णिका ॥ दलानिश्वेतवर्णानियद्वाचित्राणिकल्पयेत् ॥ तिस्रोरेखावहिःकार्याःसितरक्तासिताःक्रमात् ॥ " इति । अथद्वादश
लिंगतोभद्रंलैंगे । " प्रागुदीच्यागतारेखाःषट्त्रिंशद्विप्रकल्पयेत् । पदानिद्वादशशतंपंचविंशतिरेवच ॥ खंडेंदुस्त्रिपदाःकोणे
शृंखलाषट्पदैःस्मृता ॥ त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः । त्रयोदशपदावापीलिंगमष्टादशैःस्मृतम् ॥ लिंगत्रयस्यपंक्तौतुशोभाको
ष्ठाश्चतुर्दश ॥ तेषामुपरिपंक्तौतुकोष्ठाःसप्तदशैवतु । पूजापंक्तिस्तुविज्ञेयापरितःपरिकल्पिता ॥ पूजापंक्त्यंतरापंक्तौकोष्ठाद्व्यशीतिसं
ख्यया । परिधिःसतुविज्ञेयोंऽतरामंडलयोर्द्वयोः ॥ परिध्यंतरकोष्ठेषुसर्वतोभद्रमालिखेत् । विशेषश्चात्रविज्ञेयःशृंखलाषट्पदाभवेत् ॥
त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः । पंचविंशत्पदावापीपरिधिःषोडशात्मकः ॥ मध्येनवपदंपद्मंकर्णिकाकेसरान्वितम् । सत्वंरज
स्तमोवर्णाःपरितोमंडलस्यतु ॥ त्रयःपरिधयःकार्यस्तत्रद्वाराणिकारयेत् । सितेंदुःशृंखलाकृष्णावल्लीनीलाप्रकीर्तिता ॥ भद्रंचैवारुणंज्ञे
यंवापीस्याच्छ्वेतवर्णिका । लिंगानिकृष्णवर्णानिपार्श्वतोद्वादशैवतु ॥ परिधिःपीतवर्णःस्यात्कमलंपंचवर्णकम् ॥ "॥ अथचतुर्लिंगतो
भद्रंलैंगे । "रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिंगसमुद्भवे । कोणेंदुस्त्रिपदःश्वेतस्त्रिपदैःकृष्णशृंखला ॥ वल्लीसप्तपदानीलाभद्रंरक्तंचतुष्पदम् ।
भद्रपार्श्वेमहारुद्रंकृष्णमष्टादशैःपदैः ॥ शिवस्यपार्श्वतोवापींकुर्यात्पंचपदांसिताम् । एकंपदंतथापीतंभद्रवाप्योस्तुमध्यतः ॥ शिर

सिश्रृंखलायाश्चकुर्यात्पीतपदत्रयम् । लिंगानांस्कंदतःकोष्ठाविंशतरिक्तवर्णकाः ॥ परिधिःपीतवर्णस्तुपदैःषोडशभिःस्मृतम् ॥ पदैस्तुनवभिःपश्चाद्रक्तंपद्मंसकर्णिकम्॥" एकलिंगतोभद्रंगौरीतिलके "तिर्यगूर्ध्वगतारेखाःकार्याःस्निग्धास्त्रयोदश। कोणेंदुस्त्रिपदःकार्यःश्रृंखलास्त्रिपदाःस्मृताः ॥ वल्लीतुत्रिपदानीलाभद्रंरक्तंप्रकल्पयेत् ॥ पदैर्द्वादशभिःस्पष्टमुत्तरेपूर्वदक्षिणे ॥ पश्चिमायांमहारुद्रमष्टाविंशतिकोष्ठकैः ॥ लिंगपार्श्वेतथामूर्ध्निअष्टौकोष्ठाःसुपीतकाः ॥ लिंगमेकंतथागौर्यास्तिस्रःस्युरत्रमंडले ॥ पूजयेन्मंडलंचैतत्तस्यगौरीप्रसीदति॥" अथमुद्राः॥ तंत्रांतरे । "देवतानेनसंतुष्टासर्वदासंमुखीभवेत् ॥ अंगुष्ठौनिक्षिपेत्सेयंमुद्रात्वावाहनीमता ॥ संग्रथ्यनिक्षिपेत्सेयंमुद्रात्वासनसंज्ञिका ॥ अधोमुखीत्वियंचेत्स्यात्स्थापनीमुद्रिकामता ॥ उच्छ्रितावुच्छ्रितौकुर्यात्संमुखीकरणीभवेत् ॥ प्रसृतांगुलिकौहस्तौमिथःश्लिष्टौतुसंमुखौ ॥ कुर्यात्स्वहृदयेसेयंमुद्राप्रार्थनसंज्ञिका ॥ इत्येवंसर्वदेवानांपूजनेषट्प्रदर्शयेत् ॥ " शिवपूजायांलिंगमुद्रा । "उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठेनबंधयेत् । वामांगुलीर्दक्षिणाभिरंगुलीभिश्चवेष्टयेत् ॥ लिंगमुद्रेयमाख्याताशिवसान्निध्यकारिणी ॥ श्रीकामःशीर्षिणकुर्वीतराज्यकामस्तुनेत्रयोः॥मुखेत्वन्नाद्यकामस्तुपादयोःसुखकामकृत् ॥ " इति । ज्ञानमालायाम् "नाक्षतैरर्चयेद्विष्णुंनतुलस्यागणाधिपम् । नदूर्वयायजेद्देवींनसूर्यंविल्वपत्रकैः ॥ औन्मत्तमर्कपुष्पंचविष्णोर्वर्ज्यंसदाबुधैः ॥ " 'अक्षतास्तुयवाःप्रोक्ता' इति तंत्रांतरे । "महाभिषेकंसर्वत्रशंखेनैवप्रकल्पयेत् ॥ सर्वत्रैवप्रशस्तोयःशिवसूर्यार्चनंविना ॥ " इति ॥ अथव्रतोद्यापनानुक्तौविधिः ॥ नंदिपुराणे "कुर्यादुद्यापनंतस्यसमाप्तौयदुदीरितम् ॥ उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत् ॥ यत्रचोद्यापनंनोक्तंव्रतानुगुणतश्चरेत् ॥ वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते ॥ गांचैवकांचनंदद्याद्व्रतस्यपरिपूर्तये ॥ " गौःप्रत्यक्षा तन्मौल्यंवा । "गवांमौ

ल्यंचनिष्कःस्यात्तदर्धंपादमेवच । ” सुवर्णंरौप्यंवा । उक्तोद्यापनेतु “ आदौमध्येतथाचांतेव्रतस्योद्यापनंभवेत् ” इति । व्रतभंगेसंपू
र्णताविधिःभविष्ये । “ कृष्णउवाच ॥ किंचिद्भग्नंप्रमादेनयद्व्रतंव्रतिनांस्थितम् ॥ तत्संपूर्णंभवेत्सर्वंव्रतेनानेनपांडव ॥ यस्यव्रतस्य
योदेवस्तद्रूपंहेमनिर्मितम् ॥ द्विभुजंपंकजारूढंकार्यंप्रहसिताननम् ॥ स्नापयेत्पयसादध्नाघृतक्षौद्ररसांबुभिः ॥ गंधचंदनपुष्पैश्चपूजां
कुर्यात्समाहितः ॥ तोयपूर्णस्यकुंभस्यमुखेविन्यस्यदेवताम् ॥ धूपदीपाक्षतैर्वस्त्रैरत्नैर्बहुप्रकारकैः ॥ अर्घ्यंदद्याच्चतन्नाम्नामंत्रेणानेनपां
डव ॥ उपवासस्यदानस्यप्रायाश्चित्तंकृतंमया ॥ शरणंचप्रपन्नंमांकुरुष्वाद्यदयांपुनः ॥ प्रसन्नोभवभीतस्यभिन्नचर्यंव्रतस्यच ॥
कुरुप्रसादंसंपूर्णंव्रतंसंजायतांमम ॥ यच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि ॥ तत्सर्वंत्वत्प्रसादेनसंपूर्णंजायतांमम ॥ पूर्वद
क्षिणपश्चाच्चउत्तरेचबलिंहरेत् ॥ उपर्यधस्तात्सर्वेभ्योदिक्पालेभ्योनमोनमः ॥ इदमर्घ्यमिदंपाद्यंतेभ्यस्तेभ्योनमोनमः ॥ पादौचजानु
नीचैवकटिंशीर्षंकवक्षसी ॥ कुक्षिंचहृदयंपृष्ठंवाचंचक्षुःशिरोरुहान् ॥ पूजयित्वास्यदेवस्यततःपश्चात्क्षमापयेत् ॥ पूजितस्त्वं
यथाशक्त्यानमस्तेस्तुसुरोत्तम ॥ ऐहिकामुष्मिकींदेवकार्यासिद्धिर्ममप्रभो ॥ एवंक्षमापयित्वातुदेवंविप्रायदापयेत् ॥ दाने
पूर्वमुखोविप्रोदातावैचोत्तरामुखः ॥ इदंव्रतंमयाखंडंकृतमासीत्पुराद्विज ॥ तत्सर्वंपूर्णमेवास्तुतवमूर्तिप्रसादतः ॥ ब्राह्मणोपि
प्रयच्छेतमंत्रेणानेनतेव्रतम् ॥ संपूर्णंस्यात्प्रसादेनदेवदेवस्यशार्ङ्गिणः ॥ ब्राह्मणायत्प्रभाषंतेतन्मन्यंतेदिवौकसः ॥ सर्वदेवमया
विप्रानतद्वचनमन्यथा ॥ व्यासवाल्मीकिवचनात्पराशरवसिष्ठयोः ॥ गर्गगौतमधौम्यात्रिवसिष्ठांगिरसांतथा ॥ वचनान्नारदादी
नांपूर्णंभवतुतेव्रतम् ॥ एवंविधिविधानेनगृहीत्वाब्राह्मणोव्रजेत् ॥ ततःपंचमहायज्ञान्निर्वपेद्भोजनादिकम् ॥ एवंयःकुरुतेभक्त्या ॥ ९ ॥

व्रतमेतन्नरोत्तम ॥ तस्यसंपूर्णतांयातितद्व्रतंयत्पुराकृतम् ॥ खंडंसंपूर्णतांयातिप्रसन्नेव्रतदैवते ॥ " इति ॥ अथाचार्यकृत्यम् ॥ वृताचार्योदर्भेष्वासीनोदर्भान्धारयमाणःप्राणानायम्यदेशकालौसंकीर्त्यामुकव्रतोद्यापनेयजमानेनवृतोऽहमाचार्यःकर्मकरिष्ये ॥ गणपतिंसंपूज्यशरीरशुद्ध्यर्थंपवनपावनभूतशुद्ध्यादिपुरुषसूक्तन्यासांश्चकुर्यात् । उक्तरीत्यापवनपावनादिकृत्वापुरुषसूक्तन्यासाना रभेत् ॥ तद्यथा ॥ सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्य नारायणऋषिः पुरुषोदेवताऽनुष्टुप्छंदः अंत्यात्रिष्टुप् न्यासादौपूजायां चविनियोगः ॥ ॐ सहस्रशीर्षा०वामकराय० ॥ पुरुषए० दक्षिणक० ॥ एतावानस्य० वामपादा० ॥ त्रिपादूर्ध्वउ०दक्षिणपादाय० ॥ तस्माद्विरा० वामजानवे० ॥ यत्पुरुषेणह०दक्षिणजानवे० ॥ तंयज्ञं०वामकट्यै० ॥ तस्माद्यज्ञा०संभृ० दक्षिणकट्यै० ॥ तस्मा० ऋचः० नाभ्यै० ॥ तस्मादश्वा० हृदयाय० ॥ यत्पुरुषंव्य० कंठायनमः ॥ ब्राह्मणोस्य० वामबाहवे० ॥ चंद्रमा०दक्षिणबाहवे० ॥ नाभ्याआ० मुखाय० ॥ सप्तास्या० नेत्राभ्यां० ॥ यज्ञेनयज्ञ०मूर्ध्ने० ॥ अथपंचांगन्यासः ॥ ब्राह्मणोस्य०हृदयाय० ॥ चंद्रमा०शिरसे० ॥ नाभ्याआसी०शिखायैव० ॥ सप्तास्या० कवचाय० ॥ यज्ञेनयज्ञ० अस्त्रायफट् ॥ ततःपुरुषसूक्तेनत्रिवारंव्यापकंकुर्यात् ॥ ततोयागभूमिंगत्वा सर्वतःसर्षपान्विकिरेत् ' यदत्रसंस्थितंभूतम् ' इतिमंत्रद्वयेन । ततःसाधितपंचगव्येनकुशैःसर्वत्रप्रोक्षणम् शुचीवोहव्येति०आपोहिष्ठेतितृचेनकार्यम् ॥ ततःकृतांजलिः स्वस्त्ययनंतार्क्ष्यमितिमंत्रद्वयंपठेत् ॥ देवाःआयांतु यातुधानाः अपआयांतु विष्णोदेवयजनंरक्षस्वेतिवदेत् ॥ ततःसर्वतोभद्रेलिंगतोभद्रेवाब्रह्मादिदेवताःस्थापयेत् ॥ तद्यथा ॥ मध्ये ब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप् ब्रह्मावाहनेविनियोगः ॥ ॐ ब्रह्मजज्ञानं० ब्रह्मणेन० ब्रह्माणमावाहयामि ॥ एवंसर्वत्र ॥ मंडलाद्बहिः प्राग

दिक्रमेणलोकेशान् ॥ पूर्वे त्रातारंगर्गइंद्रस्त्रिष्टुप् इंद्रावाहनेविनियोगः ॥ त्रातारमिंद्र॰ इंद्रमावाहयामि ॥ आग्नेय्याम् अग्निंदूतंकाण्वोमे
धातिथिरग्निर्गायत्री अग्न्यावाहनेविनियोगः॥अग्निंदूतंवृणीमहे॰ अग्निम्॰॥ दक्षिणस्याम् यमायसोमंयमोयमोनुष्टुप् यमावा॰ यमायसो
मं॰ यमम्॰॥निर्ऋत्यां मोषुणोघोरःकाण्वोनिर्ऋतिर्गायत्री निर्ऋत्यावाहनेविनियोगः॥मोषुणःपरापरा॰ निर्ऋतिम्॰॥ पश्चिमे तत्त्वाया
मिशुनःशेपोवरुणस्त्रिष्टुप् वरुणावाहने॰तत्त्वायामि॰वरुणम्॰॥वायव्यां वायोशतंगौतमोवायुरनुष्टुप्वाय्वावाहनेविनियोगः॥ वायोशतं
हरीणां॰ वायुम्॰ ॥ उत्तरे आप्यायस्वराहुगणोगौतमःसोमोगायत्री सोमावा॰आप्यायस्वस॰ सोमं॰ ॥ ऐशान्याम् तमीशानंगौतमईशा
नोजगती ईशानावाह॰तमीशानंजग॰ईशानम्॥॰ईशानेंद्रयोर्मध्ये ज्मयाअत्रमैत्रावरुणोवसवस्त्रिष्टुब्वस्वावाहने॰ज्मयाअत्रवसवो॰वसू
नावाह॰ ॥ इंद्राग्निमध्ये आरुद्रासःश्यावाश्वएकादशरुद्रोजगती एकादशरुद्रा॰ आरुद्रासः॰ एकादशरुद्रान्आ॰ ॥ अग्नियमयोर्मध्ये
त्यान्नुसामदोमत्स्योद्वादशादित्यागायत्रीद्वादशादित्यावा॰त्यान्नुक्षत्रियां अव॰द्वादशादित्यानावा॰ ॥ यमनिर्ऋतिमध्ये मरुतोयस्य
राहुगणोमरुतोगायत्री मरुदावा॰मरुतोयस्य॰मरुतआ॰॥ निर्ऋतिवरुणयोर्मध्ये ओमासोमधुच्छंदाविश्वेदेवागायत्री विश्वेदेवावा॰ओ
मासश्चर्ष॰विश्वान्देवान्॰॥वरुणवायुमध्ये यज्ञेनयज्ञमितिनारायणःपुरुषस्त्रिष्टुप् साध्यदेवावा॰ यज्ञेनयज्ञमय॰साध्यदेवान्॰ ॥वायुसो
ममध्ये अश्विनावर्तिराहुगणोगौतमोश्विनावुष्णिक् अश्व्यावा॰अश्विनावर्ति॰अश्विनौ॰ ॥ सोमेशानयोर्मध्ये यदक्रंदोदीर्घतमाक्रंदस्त्रिष्टु
प् स्कंदावा॰ यदक्रंद॰ स्कंदमा॰॥ब्रह्मेंद्रमध्ये इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णवावा॰ इदंविष्णु॰ विष्णुमा॰ ॥ ब्रह्माग्निमध्ये ग
णानांत्वागृत्समदोगणपतिर्जगती गणपत्यावाह॰ गणानांत्वा॰ गणपतिमावाहयामि ॥ ब्रह्मयममध्ये आयंतुनःप्रजापतिःपितरस्त्रिष्टुप्

पित्रावा० आयंतुनःपितर० पितॄगा० ॥ ब्रह्मनिर्ऋतिमध्ये अप्सरसांमैत्रावरुणिर्गंधर्वाप्सरसोनुष्टुप् गंधर्वाप्सरावाहनेविनियोगः ॥
अप्सरसां०गंधर्वाप्सरसआ०॥ब्रह्मवरुणमध्ये जज्ञानंप्रजापतिःसप्तमातरोऽनुष्टुप् सप्तमात्रावा० जज्ञानंसप्तमातर० सप्तमातॄरा० ॥ ब्र
ह्मवायुमध्ये नमोअस्तुसर्पेभ्योविश्वेदेवाःसर्पाअनुष्टुप्सर्पावा० नमोअस्तुसर्पेभ्यो०सर्पाना० ॥ ब्रह्मसोममध्ये तामग्निवर्णांसौभरिर्दुर्गा
त्रिष्टुप् दुर्गावाहनेविनियोगः॥तामग्निवर्णां०दुर्गामावा०॥ब्रह्मेशानमध्ये इमंमेगंगेक्षिप्रैय्यमेधागंगानद्योजगती गंगाद्यावा०इमंमेगंगे०गंगा
दिनदीरावा० ॥ ततोःमंडलांतःपद्मेशानदलाग्रादारभ्यदलाग्राष्टकेषु ऐशान्याम् अदितिर्लौक्योदक्षोनुष्टुप् दक्षावाह० अदितिर्ह्यज
निष्ट० दक्षमा० ॥ पूर्वे सहस्रशीर्षेतिनारायणःपुरुषोनुष्टुप् नारायणावाह० सहस्रशीर्षा०पुरुषमा० ॥ आग्नेय्याम् जातवेदसेकश्यपो
दुर्गात्रिष्टुप् दुर्गावाहने०जातवेदसे०दुर्गामा० ॥ दक्षिणस्याम् उदीरतांशंखःस्वधात्रिष्टुप् स्वधावा० उदीरतामवर० ॥ स्वधामा० ॥
निर्ऋत्याम् परंमृत्योःसंकुशिकोमृत्युस्त्रिष्टुप् मृत्य्वावा० परंमृत्यो अनु०मृत्युमावाह० ॥ पश्चिमे आयंगौःसार्पराज्ञीसर्पागायत्री सर्पा
वा० आयंगौः०शेषमा० ॥ वायव्याम् धाम्नोधाम्नोराजन्सप्तसागराअष्टी सप्तसागरा० धाम्नोधाम्नो० सप्तसागराना० ॥ उत्तरे मरुतोयस्य
राहुगणोमरुतोगायत्री मरुदावा० मरुतोयस्य० मरुतआ० ॥ मध्येब्रह्मणःपादमूले आतूनइंद्रेतिप्रजापतिर्गणपतिर्गायत्री गणप
त्यावा० आतूनइंद्र० गणपतिमा० ॥ कर्णिकाधःस्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री भूम्यावाह०स्योनापृथिवी०भूमिमा० ॥
तदुपरि मेरवेनमः मेरुमा० ॥ ततःपरितःपूर्वादिक्रमेण पूर्वे अग्निमीळेति ऋग्वेदमा० ॥ दक्षिणस्याम् इषेत्वेति यजुर्वेदमा
वा० ॥ पश्चिमे अग्नआयाहिवीतयइति सामवेदमा० ॥ उत्तरे शन्नोदेवीति अथर्ववेदमावा० ॥ मंडलबाह्ये पूर्वादिक्रमेण दिक्पालायुध

वाहनानि ॥ पूर्वे वज्राय० ॥ आग्नेय्यादौ शक्तये० दंडाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० ॥ पुनःपूर्वादौतद्बाह्ये ॥ ऐरावताय० मेषाय० महिषाय० प्रेताय मकराय० एणाय० शिबिकायै० वृषभाय० ॥ पुनःपूर्वामारभ्य तद्बाह्ये ॥ गौतमाय० भरद्वाजाय० विश्वामित्राय० कश्यपाय० जमदग्नये० अत्रये० वसिष्ठाय० अरुंधत्यैन० ॥ तद्बाह्येपूर्वादौ ॥ आदित्यादिग्रहान् ॥ पूर्वे सूर्यम् एवमाग्नेय्यादौ सोमं० भौमं० बुधं० गुरुं० शुक्रं० शनिं० राहुम् । पूर्वैशांतरालेकेतुम् ॥ तद्बाह्येशक्तयः ॥ पूर्वादिक्रमेण ॥ ऐंद्रीं० कौमारीं० ब्राह्मीं० वाराहीं० चामुंडां० वैष्णवीं० माहेश्वरीं० वैनायकीं० स्थाप्य तदस्तुमित्रावरुणा० गृहावैप्रतिष्ठासूक्तं० प्रतिष्ठाप्यपूजयेत् ॥ तद्यथा देशकालौसंकीर्त्य० ब्रह्मादिस्थापितदेवानांषोडशोपचारैःपूजनमहंकरिष्ये ॥ स्ववामतः जलपूर्णं कलशंप्रतिष्ठाप्यसंपूज्यगंगाद्याआवाह्य ॥ ततोःदक्षिणतःशंखंसंपूज्यघंटांसंपूज्य आत्मानंपूजासामग्रींचसंप्रोक्ष्य तत्तन्मंत्रेनामिमं त्रैर्वापुरुषसूक्तेनचपूजयेत् ॥ ततोमंडलोपरि अक्षतपुंजेकलशंप्रतिष्ठापयेत् ॥ तद्यथा महीद्यौरितिभूमिंस्पृष्ट्वा० ओषधयः सं वदंतेइतियवादिकान्क्षिप्त्वा० आकलशेषुधावतिइतिकलशंसंस्थाप्य० इमंमेगंगेइतिजलमापूर्य गंधद्वारामितिगंधंक्षिप्त्वा याओ षधीरितिसर्वौषधीःक्षिप्त्वा कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपंचपल्लवान् स्योनापृथिविइतिसप्तमृदः याःफलिनीर्याइतिफलं सहिरत्नानीतिरत्नम् हिरण्यरूपइतिहिरण्यम् युवासुवासाइतिवस्त्रेणवेष्टय पूर्णादर्वीतिउपरिपूर्णपात्रंन्यसेत् ॥ तत्त्वायामीतिवरुणमा वाह्यपूजयेत् ॥ कलशस्यमुखेविष्णुरित्यादि आवाह्यप्रार्थयेत् ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोऽसितदाकुंभविधृतोविष्णु नास्वयम् ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासिविष्णु

स्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहे जलोद्भव ॥ सान्निध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ ततःप्रतिमानामग्न्युत्तारणंकुर्यात् ॥ तद्यथा ॥ देशकालौसंकीर्त्य अस्यदेवस्यपूज्यत्वाधिकारसिद्ध्यर्थमग्न्युत्तारणंकरिष्ये ॥ अग्निःसप्तिमितिसप्तर्चस्यसूक्तस्यसौचिकोवैश्वानरस्त्रिष्टुप् अग्न्युत्तारणेविनियोगः ॥ सप्तिंवाजंभ० अग्निःस० अङ्गमन्नूर्जेत्यनुवाकेनवा ॥ अथप्राणप्रतिष्ठा ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामाथर्वाणिच्छंदां० चैतन्यरूपापराप्राणशक्तिर्दे० आंबीजं ह्रींशक्ति क्रोंकीलकं देवस्यप्राणप्रतिष्ठापनेवि०ॐ आं ह्रीं क्रों अं कं खं गं घं ङं आं क्रों ह्रीं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अंगु० ॥ ॐ आं ह्रीं क्रों इं चं छं जं झं ञं क्रों ह्रीं आं शब्दस्पर्शरसरूपगंधात्मनईत र्जनीभ्यां न० ॥ ॐ आं ह्रीं क्रों उं टं ठं डं ढं णं ऊं क्रों ह्रीं आं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊंमध्यमाभ्यां० ॥ ॐ आं ह्रीं क्रों ऐं तं थं दं धं नं ऐं क्रों ह्रीं आं वाक्पाणिपादपायूपस्थात्मनेऐं अनामिकाभ्यां न० ॥ ॐ आं ह्रीं क्रों पं फं बं भं मं ओं क्रों ह्रीं आं वचनादानगतिविसर्गात्मने ॐ कनिष्ठिकाभ्यां० ॥ ॐ आं ह्रीं क्रों अँ यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं मनोबुद्ध्यहंकारचित्तविज्ञानात्मनेकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥ ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं देवस्यप्राणइहप्राणाः ॥ ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं देवस्यजीवइहस्थितः ॥ ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं देवस्यसर्वेन्द्रियाणिवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थाइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ असुनीतइतिऋचंपठेत् ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तिंकरिष्ये ॐ१५ ॥ ततः रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशं को

दंडमिक्षूद्भवगुणमथमप्यंकुशंपंचबाणान् ॥ बिभ्राणासृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणश
क्तिःपरानः॥ ततश्चत्वारिवागितिपठेत्॥ ततःकलशस्थपूर्णपात्रोपरिसावरणंदेवंतत्तद्देवताप्रकाशमंत्रेणसंस्थाप्यपूजयेत्॥ पात्रांतरेवा
पंचामृतस्नानपर्यन्तंसंपूज्य तदनंतरं कलशंस्थापयेदितिवा ॥ अथपूजाविधिःसर्वव्रतेषुसामान्यत उच्यते ॥ आगच्छदेवदेवेशतेजो
राशेजगत्पते ॥ क्रियमाणांमयापूजांगृहाणसुरसत्तम ॥ सहस्रशीर्षेत्यावाहनम् ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितम् ॥ आसनं
देवदेवेशप्रीत्यर्थंप्रतिगृह्यताम् ॥ पुरुषएवेदमासनम् ॥ पाद्यंगृहाणदेवेशसर्वक्षेमकरप्रभो ॥ भक्त्यासमर्पितंदेवलोकनाथनमोस्तुते ॥
एतावानस्येतिपाद्यम् ॥ नमस्तेदेवदेवेशनमस्तेधरणीधर ॥ नमस्तेजगदाधारअर्घ्यंनःप्रतिगृह्यताम् ॥ त्रिपादूर्ध्वमित्यर्घ्यम् ॥ कर्पू
रवासितंतोयंमन्दाकिन्याःसमाहृतम् ॥ आचम्यतांजगन्नाथमयादत्तंहिभक्तितः ॥ तस्माद्विराळेत्याचमनीयम् ॥ शर्करारससंयुक्तं
पयोदधिघृतंमधु ॥ पंचामृतंमयानीतंस्नानार्थंप्रतिगृह्यताम् ॥ पंचामृतस्नानम् ॥ आप्यायस्वेतिपयःस्नानम् ॥ दधिक्राव्णइतिद
धिस्नानम्।घृतंमिमिक्षेइतिघृतस्नानम्॥मधुवातेइतिमधुस्नानम्॥स्वादुःपवस्वेतिशर्करास्नानम्॥आपोहिष्ठेतिशुद्धोदकेनसंस्नाप्यपं
चोपचारैःसंपूज्यमहाभिषेकंकुर्यात् ॥ गंगाचयमुनाचैवनर्मदाचसरस्वती ॥ तापीपयोष्णीकृष्णाचताभ्यःस्नानार्थमाहृतम् ॥ तोयमे
तत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यताम् ॥ यत्पुरुषेणेतिस्नानम् ॥ रुद्रेणपुरुषसूक्तेनश्रीसूक्तेनचतत्तद्देवताप्रकाशकसूक्तेनमंत्रेणमूलमंत्रे
णवा महाभिषेकंकुर्यात् ॥ सर्वभूषाधिकेदेवलोकलज्जानिवारणे ॥ मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् ॥ तंयज्ञमितिवस्त्रम् ॥
देवदेवनमस्तेस्तुत्राहिमांभवसागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतमितियज्ञोपवीतम् ॥ श्रीखंडं

चंदनंदिव्यंगंधाढ्यंसुमनोहरम् ॥ विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यताम् ॥ तस्माद्यज्ञात्सर्वहुतऋचःसा०गंधम् ॥ माल्यादीनिसुगं
धीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपुष्पाणिप्रीत्यर्थंप्रतिगृह्यताम् ॥ तस्मादश्वेतिपुष्पम् ॥ वनस्पतिरसोद्भूतोगंधाढ्योगं
धउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यताम् ॥ यत्पुरुषंव्यदधुरितिधूपम् ॥ साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया ॥
दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ ब्राह्मणोस्येतिदीपम् ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् ॥ भक्ष्यभोज्यसमायुक्तं
नैवेद्यंप्रतिगृह्यताम् ॥ चंद्रमामनसइतिनैवेद्यम् ॥ इदंफलंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥
फलेनफलितंसर्वंत्रैलोक्यंसचराचरम् ॥ तस्मात्फलप्रदानेनसफलाश्चमनोरथाः ॥ फलम् ॥ पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतम् ॥
कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम् ॥ नाभ्याआसीदितितांबूलम् ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदम
तःशांतिंप्रयच्छमे ॥ सप्तास्यासन्नितिदक्षिणा ॥ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच ॥ त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यताम् ॥
नीराजनम् ॥ नमस्तेपुंडरीकाक्षनमस्तेब्रह्मरप्रिय ॥ नमस्तेजगदानंददेवदेवनमोस्तुते ॥ यज्ञेनयज्ञमितिपुष्पांजलिः ॥ अन्यान्य
पितद्देवतासूक्तानिपठित्वा पुष्पांजलिः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तानितानिविनश्यंतिप्रदक्षिणपदेपदे ॥ इतिप्रद
क्षिणा ॥ नमःसर्वहितार्थायजगदाधारहेतवे ॥ साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः ॥ इतिनमस्कारः ॥ यन्मयाभक्तिसंयुक्तंपत्रं
पुष्पंफलंजलम् ॥ प्रकल्पितंचनैवेद्यंतद्गृहाणजगत्पते ॥ इतिसर्वपदार्थसमर्पणम् ॥ इतिसामान्यपूजाविधिः ॥ इतिश्रीमच्चि
त्तपावनकुलाब्धिसंभवघारोपनामकबल्लाळसूरिसूनुशंकरविरचितायांव्रतोद्यापनकौमुद्यांसर्वव्रतसाधारणपरिभाषाप्रकरणंसमाप्तम् ॥

अथव्रतोद्यापनानिलिख्यंते ॥ तत्रतावत्सर्वव्रतानांमध्येएकादश्याःप्राधान्यात्प्रथममेकादशीव्रतोद्यापनमुच्यते ॥ अथएकादशी
व्रतोद्यापनंचिकीर्षुर्दशम्यामेकाशनउक्तनियमवान्द्वितीयेऽह्निप्रातः नद्यादौभस्मगोमयमृत्तिकास्नानपुरःसरंस्नात्वास्नानांगतर्पणंकृ
त्वाअहतेवाससीपरिधायतिलकादिधृत्वाशरीरशुद्ध्यर्थंब्रह्मकूर्चपुरःसरंपंचगव्यंप्राश्य स्वगृह्यविधिनानित्यकर्मनिर्वर्त्यकूष्मांडहोमा
दिनाआत्मानंपावयित्वा मध्याह्नेद्वित्राधिकान्शुचीनध्यात्मविदःउक्तगुणसंपन्नान्द्विजानुपवेश्य स्वयंदर्भेष्वासीनोदर्भान्धारयमा
णोदेवब्राह्मणवंदनपुरःसरंसपत्नीकःप्रधानसंकल्पंकुर्यात् ॥ तद्यथादेशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकंधर्मार्थकाममोक्षचतुर्विध
पुरुषार्थसिद्धिद्वाराश्रीपर० अमुककामनयावामयाचरितं शुक्लैकादशीव्रतंतथाकृष्णैकादशीव्रतम् तत्संपूर्णफलावाप्तयेशुक्लकृ
ष्णैकादशीव्रतोद्यापनाख्यंकर्मकरिष्ये ॥ पृथपृथग्वाशुक्लकृष्णैकादश्योःसंकल्पःकार्यः ॥ पित्रादीनांचेत्तर्हितेषामूहःकार्यः ॥ तदं
गविहितंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यब्रह्मसदस्यर्त्विग्वरणंकरिष्यइतिसंकल्प्य स्वगृह्यविधिनाकुर्यात् ॥
केचनगणेशपूजनपूर्वकंपुण्याहवाचनमेवेच्छंति ॥ आचार्यवरणम् ॥ यजमानःस्वगोत्रादिउच्चार्य अमुकगोत्रममुकशर्माणंब्राह्मणमे
कादशीव्रतोद्यापनाख्येकर्मणिविहितकर्मकर्तुमाचार्यंत्वामहंवृणे ॥ वृतोऽस्मीतिप्रतिब्रूयात् ॥ आचार्यस्तुयथास्वर्गेशक्रादीनां
बृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ इतिप्रार्थ्यमधुपर्कादिनापूजयेत्सहैववा ॥ ततःपूर्ववद्ब्राह्मणंवृत्वा । यथाचतुर्मु
खोब्रह्मासर्ववेदविशारदः ॥ तथात्वंममयज्ञेऽस्मिन्ब्रह्माभवद्विजोत्तम ॥ इतिसंप्रार्थ्यपूर्ववत्पूजयेत् ॥ ततःसदस्यम् । त्वंनोगुरुःपितामा ॥ ९ ॥
तात्वंप्रभुस्त्वंपरायणम् ॥ आपद्विमोक्षणार्थायसदस्यंत्वामहंवृणे ॥ वृत्वापूर्ववत्पूजयेत् ॥ ततऋत्विजः ॥ भगवन्सर्वकर्मज्ञसर्व

धर्मभृतांवर ॥ विततेममयज्ञेऽस्मिन्नृत्विक्त्वंभवसुव्रत ॥ वृत्वापूर्ववत्पूजयेत्प्रार्थयेच्च ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसन्नैश्चकर्तव्यंकर्मेदंविधिपूर्वकम् ॥ इति ॥ ततःआचार्यःसंकल्पंकृत्वा पूजासामग्रींगृहीत्वा यजनदेशंगत्वा पूर्वोक्तप्रकारेणसर्वतो भद्रेब्रह्मादिदेवताःआवाह्यसंपूज्यत दुपरिअक्षतपुंजेकेशवादिद्वादशनामांकितमक्षतपूर्णताम्रमयंतंडुलपूर्णराजतपूर्णपात्रसहितंकलशं प्रतिष्ठाप्य तत्राष्टदलपद्मेदेवताआवाहयेत् ॥ तद्यथा ॥ प्रणवस्यपरब्रह्मऋषिः परमात्मादेवता दैवीगायत्रीछंदः व्याहृतीनांक्रमेण जमदग्नि भरद्वाजभृगवऋषयः अग्निर्वायुःसूर्योदेवताः दैवीगायत्रीदैव्युष्णिग्दैवीबृहत्यश्छंदांसि पुरुषावाहनेविनियोगः ॥ तत्रक र्णिकायां भूःपुरुषमा० भुवःपुरुषमा० सुवःपुरुषमा० भूर्भुवःसुवःपुरुषमा० ॥ ततःसुवर्णप्रतिमायाम् ॥ सहस्रशीर्षानारायणः पुरुषोनुष्टुप् पुरुषावाहनेवि०सहस्रशीर्षा०लक्ष्मीयुतंपुरुषंमध्येआवाहयामि स्थापयामि पूजयामिनमः ॥ परितःअग्निम्० इंद्रं० प्रजापतिं० विश्वान्देवान्० ब्रह्माणं० वसुदेवं० रामं० श्रियम्० आवाह्यनाममंत्रेण ततःपूर्वदक्षिणपश्चिमोत्तरदलाभ्यंतरेषु स्त्रीचतुःसहस्रसहितांरुक्मिणीं १ स्त्रीचतुःसहस्रसहितांसत्यभामाम् २ स्त्रीचतुःसहस्रसहितांजांबवतीं ३ स्त्रीचतुःसहस्रसहितां कालिंदींचावाह्य ततआग्नेयादिकोणेषु शंखं० चक्रं० गदां० पद्मम्० आवाह्य पुरतः ॥ सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः ॥ विषपापहरोनित्यमतःशांतिंप्रयच्छमे ॥ इतिगरुडमावाह्य परितःपूर्वादिक्रमेण इंद्राद्यष्टौलोकपालांस्तत्तन्मंत्रैर्नाममंत्रैर्वाआवाह्य ॥ तदस्तुमित्रा० गृहावैइतिप्रतिष्ठाप्य पूर्वोक्तप्रकारेणपूजयेत् ॥ पुष्पानंतरमंगपूजांकुर्यात् ॥ दामोदरायनमःपादौपूजयामि ॥ एवंसर्वत्र ॥ माधवाय०जानुनीपू० कामपतये०गुह्यंपू० वामनाय०कटींपू० पद्मनाभाय०नाभिंपू० विश्वमूर्त्तये०उदरंपू०

 

ज्ञानगम्याय०हृदयंपू० श्रीकंठाय०कंठं० सहस्रबाहवे०बाहूपू० योगिनेन०चक्षुषीपू० उरगाय० ललाटंपू० नाकसुरेश्वरा०नासांपू०
श्रवणेशाय०श्रवणौपू० सर्वकामदाय०शिखांपू०सहस्रशीर्ष्णे०शिरःपू० सर्वरूपिणे०सर्वांगंपू० ॥ धूपं० दीपं० ॥ नैवेद्यांश्च
चतुर्विंशत्संख्यान्दद्यादनुक्रमात् ॥ भक्त्याचतुर्विंशतिषुतिथिष्वपिपरंतप ॥ इच्छयाचतदादद्याद्दैवोद्यापनंभवेत् ॥ मोदकाँ
ल्लडुकान्वापिघृतपूरकमंडकान् ॥ सोहालिकादिकंसारसेवासक्तुफलानिच ॥ वटकान्पायसंदुग्धंशालिदध्योदनंतथा ॥ इंडी
रिकाःपूरिकाश्चअपूपान्गुडमोदकान् ॥ तिलपिष्टंखंडपिष्टंलाजदुग्धंसशर्करम् ॥ रंभाफलंचसघृतंमुद्गचूर्णंगुडौदनम् ॥ एवं
क्रमेणनैवेद्यंदद्याद्देवस्यतुष्टये ॥ नमस्कारोत्तरंविशेषार्घ्यंदद्यात् ॥ तैजसपात्रेजलंनारिकेलंबीजपूरमक्षतान्पुष्पंचंदनादिफलंहिर
ण्यंनिक्षिप्यजानुभ्यांधरणींगत्वाइमंमंत्रमुदीरयेत् ॥ नारायणजगन्नाथलक्ष्मीकांतदयानिधे ॥ गृहाणार्घ्यंमयादत्तंव्रतसंपूर्तिहेतवे ॥
इतिमूलमंत्रेणपूजयेदितिवा॥ ततोःब्राह्मणान्संपूज्यगीतशास्त्रपुराणकथाश्रवणादिनाजागरपूर्वकंरात्रिंनिनयेत्॥ततःप्रातःआचार्यःनित्य
कर्मनिर्वर्त्यमंडलदेवताःपंचोपचारैःसंपूज्यहोममारभेत् ॥ यद्यथा ॥ देशकालौसंकीर्त्यशुक्लैकादशीव्रतोद्यापनांगभूतंविहितहवनंक
रिष्यइतिसंकल्प्य समचतुरस्रमरत्निमात्रंहोमानुसारेण अधिकंवाचतुरंगुलोत्सेधंसन्मृदास्थंडिलंविधाय तत्रयजमानशाखयातदभावे
ऋत्विक्शाखयावा अग्निप्रणयनादिकंविदध्यात् ॥ तदुक्तंमानवसंहितायां " कर्तुःशाखोक्तमार्गेण आचार्यस्याथवापुनः॥ कुर्यादग्निप्र
णयनंहवनादिविधिंतथा ॥ " ततःअन्वादध्यात् ॥ तद्यथा ॥ एकादशीव्रतोद्यापनहवनेदेवतापरिग्रहार्थमन्वाधानंकरिष्यइतिसंकल्प्य ॥ १० ॥
श्रद्धएहीत्यादियजुःशाखिनाम् ॥ अस्मिन्नन्वाहितेग्नौजातवेदसमित्यारभ्यचक्षुषी आज्येनेत्यंतमुक्त्वा अत्रप्रधानं पुरुषंपुरुषसूक्तेनप्र

त्यृचमाज्येनअमुकावृत्तिसंख्यया अग्निमृइंद्रंप्रजापतिंविश्वान्देवान्ब्रह्माणंचाज्येनएकवारं वसुदेवंरामंश्रियंविष्णुंनाममंत्रेणघृताक्तपाय
सद्रव्येणैकवारं पुनःविष्णुंविष्णोर्नुकमितिषण्मंत्रैः प्रत्यृचंघृताक्तपायसद्रव्येण अग्निंवायुंसूर्यंप्रजापतिंचएकवारंघृताक्तपायसद्रव्येण
केशवादिदामोदरांतद्वादशदेवताः नाममंत्रैःएकवारंपायसद्रव्येण स्त्रीचतुःसहस्रसहितांरुक्मिणींस्त्रीचतुःसहस्रसहितांसत्यभामांस्त्रीच
तुःसहस्रसहितांजांबवतींस्त्रीचतुःसहस्रसहितांकालिंदींशंखंचक्रंगदांपद्मंगरुडम् इंद्राद्यष्टौलोकपालान्ब्रह्मादिमंडलदेवताश्चएकैकयाआ
ज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादिपयसिस्थालीपाकविधिनाचरुं श्रपयित्वापवित्रेंतेविततमितिप्रापणमुद्धरेत् ॥ आज्यभा
गांतंकृत्वाप्रधानदेवताहोमयेत्॥ सहस्रशीर्षा० १६ अग्नये० इंद्राय० प्रजापतये०विश्वेभ्यो देवेभ्य०ब्रह्मणेइत्याज्येन॥ अथघृताक्तपा
यसेनवसुदेवाय० रामाय० श्रियै०विष्णवे०॥विष्णोर्नुकं०तदस्यप्रियं०प्रतद्विष्णुरितितिसृणांदीर्घतमाविष्णुस्त्रिष्टुप् हवनेविनियोगः॥
विष्णोर्नुकं०तदस्यप्रियं०प्रतद्विष्णुः०॥परोमात्रया०विचक्रमे०त्रिर्देवइतितिसृणांवसिष्ठोविष्णुस्त्रिष्टुप्हवनेविनियोगः ॥ परोमात्रया०
विचक्रमे०त्रिर्देवः०भूःस्वाहा भुवःस्वाहा स्वःस्वाहा भूर्भुवःस्वःस्वाहा अथकेवलंपायसेन ॐकेशवायनमःस्वाहा ॥ प्रणवःस्वाहाकारः
सर्वत्र॥नारायणाय० माधवाय० गोविंदा० विष्णवे०मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय०हृषीकेशाय० पद्मनाभाय०
दामोदराय० ॥ अथकेवलाज्येन॥स्त्रीचतुःसहस्रस०रुक्मिण्यैन०स्त्रीचतुःसहस्रस०सत्यभामायै०स्त्रीचतुःस०जांबवत्यै० स्त्रीचतुःसहस्र
सहितायैकालिंद्यै० शंखाय०चक्राय०गदायै०पद्माय०गरुडाय०इंद्राय०अग्नये० यमाय०निर्ऋतये०वरुणाय० वायवे० सोमाय०ईशा
नाय० तत्तन्मन्त्रैर्वाहुत्वा ततोःब्रह्मादिमंडलदेवताः तत्तन्मंत्रैर्नाममंत्रैर्वा केवलाज्येनहोमयेत्॥ॐ ब्रह्मणेनमःस्वाहा० इंद्राय० अग्नये०

यमाय०निर्ऋतये०वरुणाय०वायवे० सोमाय० ईशानाय०अष्टवसुभ्यः०एकादशरुद्रेभ्यः०द्वादशादित्येभ्यः० मरुद्भ्यः० विश्वेभ्यो
देवेभ्यः० साध्येभ्योदेवेभ्यः० अश्विभ्यां०स्कंदाय० विष्णवे० गणपतये० पितृभ्यः० गंधर्वाप्सरसोभ्यः०सप्तमातृभ्यः० सर्पेभ्यः०दु
र्गायै० गंगादिनदीभ्यः० दक्षाय० नारायणाय० दुर्गायै० स्वधायै० मृत्यवे० शेषाय० समुद्रेभ्यः० मरुद्भ्यः० गणपतये० पृथिव्यै०
मेरवेन० ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय० गदायै०
त्रिशूलाय० ऐरावताय० मेषाय० महिषाय० प्रेताय० मकराय० एणाय० शिबिकायै० वृषाय० गौतमाय० भरद्वाजाय० विश्वामि
त्राय० कश्यपाय० जमदग्नये० अत्रये० वसिष्ठाय० अरुंधत्यै० सूर्याय० सोमाय० भौमाय० बुधाय० गुरवे० शुक्राय० शनैश्चराय०
राहवे० केतवे० ऐंद्र्यै० कौमार्यै० ब्राह्म्यै० वाराह्यै० चामुंडायै० वैष्णव्यै० माहेश्वर्यै० वैनायक्यै० ॥ ततःस्विष्टकृतम् ॥ ततोयज
मानःदेवायप्रापणंनिवेदयेदनेनमंत्रेण ॥ त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्वसृजंयजामः ॥ त्वय्येषभागोविहितोविधेयोगृहाणहव्यंजग
तामधीश ॥ इतिनिवेद्यातिष्ठेत् । ततःअग्निंत्रिवारंचतुर्वारंवाप्रदक्षिणीकृत्यभिंधिविश्वाअपद्विषइतिधरण्यांजानुनीनिपात्यध्रुवसूक्तंपुरु
षसूक्तंचजप्त्वाऽष्टौपदानिप्रतिदिशंगच्छेदेभिर्मंत्रैः॥कृष्णायवासुदेवायहरयेपरमात्मने॥शरण्यायाप्रमेयायगोविंदायनमोनमः॥नमःस्थू
लायसूक्ष्मायव्यापकाव्यापकायच ॥ अनंतायजगद्धात्रेब्रह्मणेऽनंतमूर्तये ॥ अव्यक्तायाऽखिलेशायाचिद्रूपायगुणात्मने॥नमोमूर्तायसि
द्धायपरायपरमात्मने ॥ देवदेवायवंद्यायपरायपरमेष्ठिने ॥ कर्त्रेविश्वस्यगोप्त्रेचतत्संहर्त्रेचतेनमः ॥अथदेवायनिवेदितप्रापणमानीयमू
र्ध्निकृत्वाघोषयेत् ॥ केवैष्णवाःकेवैष्णवाःकेवैष्णवाः इतिउच्चैर्वदेत्॥ततःसमानाःप्रतिवदेयुः वयंवैष्णवाःवयंवैष्णवाःवयंवैष्णवाःइति॥

ततस्तेभ्यःसमानेभ्योहविर्दत्त्वास्वयं ॐ नमोभगवतेवासुदेवायेतिमंत्रेणइदममृतमहंप्राश्नामीतिप्राश्य आचम्यप्राणानायम्ययजमानः
आचार्योवासिद्धयेस्वाहेतिअग्नौआज्यंजुहुयात् ॥ ततःयतइंद्रभयामहेइत्यनेनात्मानमभिमंत्रयेत् ॥ ततःआचार्यःशुल्बप्रहरणंकृत्वा
प्रायश्चित्तादिहोमशेषंसमापयेत् ॥ ततःयजमानस्तिथ्यादिसंकीर्त्यकृतस्यएकादशीव्रतोद्यापनस्यसांगतासिद्ध्यर्थमाचार्यादीन्वस्त्र
तांबूलदक्षिणाभिःपूजयिष्येइतिसंकल्प्याविध्युक्तप्रकारेणसंपूज्यदक्षिणादिभिःप्रतोष्यआचार्यायश्वेतांसवत्सांसालंकारांगांदद्यात् ॥
तद्यथा यजमानःएकादशीव्रतोद्यापनपूर्तिकामः नारायणप्रीतयेआचार्यायगोप्रदानमहंकरिष्येइतिसंकल्प्यआचार्यंसंपूज्यगोःपूजामार
भेत् ॥ तद्यथा गोःपूजांकरिष्यइतिसंकल्प्य गवामंगेआदौदेवतान्यासंकुर्यात् ॥ शृंगमूलयोःब्रह्मविष्णुभ्यांनमःब्रह्मविष्णून्यसामिए
वमग्रेपि ललाटेमहादेवाय० नासावंशेषण्मुखाय० कर्णयोःअश्विभ्यां० चक्षुषोःशशिभास्कराभ्यां० दंतेषुवायुभ्यः० जिह्वायांवरुणा
य०हुंकारेसरस्वत्यै० गंडयोःयमजाभ्यां० ओष्ठयोःसंध्याद्वयाय० ग्रीवायामिंद्राय० कुक्षिदेशेरक्षोभ्यो० उरसिसाध्येभ्यो० चतुष्पा
देषुधर्माय० खुरमध्येगंधर्वेभ्यो० खुरपार्श्वेषुअप्सरोभ्यो० पृष्ठेएकादशरुद्रेभ्यो० सर्वसंधिषुवसुभ्यो० श्रोणीतटेपितृभ्यः० लांगूलेसो
माय० वालेषुआदित्यरश्मिभ्यः० गोमूत्रेगंगायै० क्षीरेसरस्वत्यै० दध्निनर्मदायै० सर्पिषिहुताशनाय० रोमरोमसुदेवानामष्टाविंशति
कोटिभ्यो० उदरेपृथिव्यै० पयोधरेषुचतुःसागरेभ्यो न० ततःउपह्वयेइतिध्यायेत् ॥ सौरभेयिसर्वहितेपवित्रेपापनाशिनि ॥ गृह्णीष्वे
तन्मयादत्तंपाद्यंत्रैलोक्यवंदिते ॥ भूर्भुवःसुवःरुद्ररूपिण्यैगवेपाद्यं० ॥ सर्वदेवमयेदेविसर्वतीर्थमयेशुभे ॥ गृहाणार्घ्यंमयादत्तंसौरभे
यिनमोस्तुते ॥ अर्घ्यं० ॥ देहेस्थितासिरुद्राणिशंकरस्यसदाप्रिये ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ आचमनीयं० ॥ याल

क्ष्मीःसर्वलोकेषुयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ स्नानं० ॥ आच्छादनंगवेदद्यात्सम्यक्छुद्धंसुशोभनम् ॥
सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी ॥ वस्त्रं० ॥ श्रीखंडंचंदनमितिगंधं० ॥ ततोऽलंकारान् शृंगभूषार्थंसुवर्णम् चरणभूषार्थंरजतं भा
लभूषार्थमादर्शं नेत्रभूषार्थंरत्नद्वयं कंठभूषार्थंघंटांपुष्पस्रजंच सर्वाऽवयवभूषार्थंपट्टकूलम् पृष्ठभूषार्थंताम्रं पुच्छभूषार्थमुक्ताफ
लस्रजं कुंकुमकर्पूरकस्तूरिकासुगंधद्रव्याणिसप्तधान्यानिघृतपूर्णकुंभान्परितःकल्पयेत् माल्यादीनीतिपुष्पं वनस्पतिरसोद्भूत०
इतिधूपम् साज्यंचवर्तिसंयुक्तामितिदीपम् ॥ सुरभिस्त्वंजगन्मातर्देविविष्णुपदेस्थिते ॥ सर्वदेवमयेग्रासंमयादत्तमिमंग्रस ॥ गोग्रास
नैवेद्यं ॥ तांबूलं हिरण्यगर्भेतिदक्षिणां ॥ पंचगावःसमुत्पन्नामथ्यमानेमहार्णवे ॥ तासांमध्येतुयानंदातस्यैदेव्यैनमोनमः ॥ नमस्कारः ॥
गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेनित्यंगवांमध्येवसाम्यहम् ॥ इतिप्रदक्षिणीकुर्वन्प्रार्थयेत् उपह्वयेसुदुघामित्या
दिवैदिकमंत्रान्पठेत् ॥ ततोयजमानःसजलतिलकुशाक्षतंगोपुच्छंगृहीत्वा स्वगोत्रादिउच्चार्य आचार्यगोत्रादिकमुच्चार्य इमांगां
सवत्सां यथाशक्तिभूषितांव्रतसंपूर्णतासिद्धिद्वारामहाविष्णुप्रीत्यर्थंतुभ्यमहंसंप्रददेइतिसतिलजलंतद्धस्तेनिक्षिपेत् नममेतित्यागं
कुर्यात् ॥ ततःप्रतिग्रहीतासावित्रेणयजुषाप्रतिगृह्यॐस्वस्तीत्युक्त्वास्वस्वजातीयांकामस्तुतिंपठेत् ॥ गौस्तारयतुइत्या
दिपठित्वा ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ अनेनगोदानेनमहाविष्णुः
प्रीयताम् ॥ ततोगोदानस्यसांगतासिद्ध्यर्थंहिरण्यंदद्यात् ॥ आगावोअग्मन्निितिप्रदक्षिणांकुर्यात् ॥ इतिगोदानम् ॥ ततोऽयज
मानःद्वादशसंख्याकान्ब्राह्मणान्केशवादिद्वादशदेवतास्वरूपान्विभाव्य केशवादिद्वादशनामभिः यथाविभवंसंपूज्य तेभ्यःपक्वान्नपू

रितान्वस्त्रतांबूलदक्षिणादिसहितान्द्वादशकलशान्केशवादिद्वादशनामांकितान् दद्यात् ॥ तत्रमंत्रः ॥ पक्कान्नपूरितंकुंभंदक्षिणावस्त्रसं
युतम् ॥ ददामिद्विजवर्यायदेवोनःप्रीयतामिति ॥ देवपदस्थानेकेशवादिनाम्नामूहःकार्यः ॥ ततःपीठदानम् ॥ इदंपीठंसोपस्करंल
क्ष्मीनारायणप्रतिमायुतंमहाविष्णुप्रीतयेतुभ्यमहंसंप्रददेइतिआचार्यायदद्यात् ॥ ततआचार्यः उत्तिष्ठब्रह्मणस्पतेइतिपीठदेवता उ
त्थाप्य पात्रांतरेउद्धृत्यकलशोदकेनसपत्नीकंयजमानंसमुद्रज्येष्ठाइत्यादिकैर्मंत्रैः सुरास्त्वामित्यादिपौराणिकैर्मंत्रैर्वैष्णवसूक्तैश्चअभि
षिंचेत् ॥ ततःस्नातःयजमानःअग्निंसंपूज्य यस्यस्मृत्या० मंत्रहीनमितिक्षमाप्य अभ्यारामिदद्रयो० यांतुदेवगणाःसर्वे इतिविसर्जये
त् ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंब्राह्मणान्यथाशक्तिभोजयिष्येयथाशक्तिदक्षिणांदातुमहमुत्सृजे तेनश्रीकर्मांगस्वरूपीपरमेश्वरः
प्रीयताम् ॥ ततःसदन्नेनदक्षिणादिनाब्राह्मणान्प्रतोष्यआशिषोगृहीत्वाव्रतसंपूर्णतांवाचयेत् ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्म
णि ॥ सर्वंभवतुमेऽच्छिद्रंब्राह्मणानांप्रसादतः ॥ इतिसंप्रार्थ्य ॥ अच्छिद्रंभवतुतेव्रतमितिब्राह्मणाःप्रतिवदेयुः ॥ ततस्तान्नमस्कृत्य
इष्टजनैःसोत्सवः भुंजीत ॥ इतिशुक्लैकादशीव्रतोद्यापनंसंपूर्णम् ॥ ॥ अथकृष्णैकादशीव्रतोद्यापनम् ॥ यजमानःदेशकालौसंकीर्त्यआ
त्मनःपापक्षयपूर्वकमेकविंशतिपुरुषानुद्धर्तुंकामनया लक्ष्मीनारायणप्रीतयेच आचरितस्यकृष्णैकादशीव्रतस्यसांगतासिद्ध्यर्थंकृ
ष्णैकादशीव्रतोद्यापनंकरिष्यइतिसंकल्प्य पूर्वोक्तप्रकारेणगणेशपूजामारभ्यआचार्यवरणांतंकर्मकुर्यात् ॥ ततआचार्यःपूर्वोक्तप्रका
रेणसर्वतोभद्रेब्रह्मादिदेवताआवाह्यसंपूज्यतदुपरिसंकर्षणादिद्वादशनामांकितंतिलपूर्णंराजतपूर्णपात्रयुतंकलशंप्रतिष्ठाप्य तत्रअष्टद
लंविलिख्यकर्णिकायाम् भूःपुरुषमित्याद्यावाह्यमध्येसहस्रशीर्षेतिसौवर्णींलक्ष्मीनारायणप्रतिमामावाह्य ततःपूर्वादिदिक्षु प्रत्येकं चतुः

सहस्रस्त्रीसहितांरुक्मिणींसत्यभामांजांबवतीं कालिंदींचावाह्य ततआग्नेय्यादिविदिक्षुगणपतिंदुर्गांक्षेत्राधिपतिंवास्तोष्पतिंचावाह्य पुनः
पूर्वादिदिक्षु ब्रह्मजज्ञानमितिब्रह्माणं विष्णोर्नुकमितिविष्णुं बलभद्रंप्रद्युम्नं त्र्यंबकमितित्र्यंबकं वसुदेवं रामम् अनिरुद्धं वामभागे
श्रियं पुरतोराजतगरुडम् पुनआग्नेय्यादिकोणेषु शंखं०चक्रं० गदां०पद्मं० पुनःपूर्वादिक्रमेण विमलाम्० उत्कर्षणीं० ज्ञानां०
क्रियां०योगां०प्रह्वां०सत्याम् ईशानां० पृष्ठभागेअनुग्रहाम् पुनःपूर्वादिक्रमेण इंद्राद्यष्टौलोकपालान् तत्तन्मंत्रैर्नाममंत्रैर्वाआवाह्य
पूर्वोक्तप्रकारेणषोडशोपचारैःसंपूज्य पुराणपठनादिनारात्रिंनिनयेत् । प्रातःपुनःपीठदेवताःसंपूज्यपूर्वोक्तप्रकारेणाग्निंप्रतिष्ठाप्य अन्वा
दध्यात् ॥ अत्रप्रधानं संकर्षणादिकृष्णांतद्वादशदेवताः घृताक्तपायसेनएकैकयाऽऽहुत्या पुरुषंविष्णुमष्टोत्तरसहस्रसंख्या
कघृताक्ततिलाहुतिभिः अष्टोत्तरशतसंख्याभिर्वा अग्निं० वायुं० सूर्यं० प्रजापतिं० प्रत्येकंस्त्रीचतुःसहस्रसहितांरुक्मिणींसत्यभा
मांजांबवतीम् कालिंदीम् एकवारंपायसेन वसुदेवंरामंश्रियंविष्णुंविष्णोर्नुकमितिषण्मंत्रैः प्रत्यृचंपायसेनगणपतिंदुर्गांक्षेत्राधिप
तिंवास्तोष्पतिंब्रह्माणंबलभद्रंप्रद्युम्नंत्र्यंबकमनिरुद्धंगरुडंशंखंचक्रंगदांपद्मं विमलाद्याअनुग्रहांतादेवताः इंद्राद्यष्टौलोकपालान्ब्रह्मादिमं
डलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादि ॥ पयसिस्थालीपाकविधिनाचरुंश्रपयित्वा पवित्रंतेविततमितिमंत्रेण
प्रापणमुद्धृत्यआज्यभागांतंकृत्वाप्रधानदेवताहोमयेत्॥ॐसंकर्षणायनमःस्वाहावासुदेवाय० प्रद्युम्नाय०अनिरुद्धाय०पुरुषोत्तमाय०अ
धोक्षजायन०नारसिंहाय०अच्युताय०जनार्दनाय०उपेंद्राय०हरये०श्रीकृष्णाय०घृताक्तपायसेनएकवारंसहस्रशीर्षा० घृताक्ततिलैःभूः
स्वाहाभुवःस्वाहास्वःस्वाहाभूर्भुवःसुवःस्वाहा प्रत्येकंस्त्रीचतुःसहस्रसहितायैरुक्मिण्यै०सत्यभामायै०जांबवत्यै०कालिंद्यै०वसुदेवाय०

रामाय॰ श्रियै॰विष्णोर्नुकं॰तदस्यप्रि॰प्रतद्विष्णु॰परोमात्रया॰विचक्रमे॰ त्रिर्देवः॰ केवलपायसेन।अथाज्येन गणपतये॰दुर्गायै॰
क्षेत्राधिपतये॰ वास्तोष्पतयेन॰ तत्तन्मंत्रैर्वा॰ ब्रह्मणे॰ बलभद्राय॰ प्रद्युम्नाय॰ त्र्यंबकाय॰ अनिरुद्धाय॰ गरुडाय॰ शंखाय॰ च
क्राय॰ गदायै॰ पद्माय॰ विमलायै॰ उत्कर्षिण्यै॰ ज्ञानायै॰ क्रियायै॰ योगायै॰ प्रह्वायै॰ सत्यायै॰ ईशानायै॰ अनुग्रहायै॰इंद्रा
येत्यादिलोकपालेभ्यः॰ ब्रह्मादिमंडलदेवताभ्यः॰ इतिहुत्वा ततःस्विष्टकृतंहुत्वा ततःपूर्वोक्तप्रकारेणदेवायप्रापणनिवेदनमारभ्यप्रा
यश्चित्तहोमांतंकर्मनिर्वर्त्यआचार्यायकृष्णांगांदत्त्वाद्वादशब्राह्मणान्संकर्षणादिकृष्णांतद्वादशनामभिःसंपूज्यतेभ्योःदक्षिणादियुतांस्ति
लपूर्णान्संकर्षणादिद्वादशनामांकितान्कलशान्दद्यात्। पीठंदत्त्वासदन्नेनब्राह्मणान्यथाविभवंसंभोज्यदक्षिणादिभिःप्रतोष्यव्रतसंपूर्णतां
वाचयित्वाआशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ इतिकृष्णैकादशीव्रतोद्यापनंसमाप्तम् ॥ इदंशुक्लकृष्णैकादशीव्रतोद्यापनंबौधाय
नसूत्रानुसारेणलिखितम् ॥ पुराणोक्तंतुसर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्यतत्राष्टदलेपद्मेसुवर्णघटितलक्ष्मीनारायण
प्रतिमामिदंविष्णुरितिमंत्रेणप्रतिष्ठाप्यपुरतोराजतंगरुडंपरितोलोकपालाष्टकंसंस्थाप्यपुरुषसूक्तेनषोडशोपचारैःसंपूज्यपुराणपठनादि
नारात्रिंनिनयेत् ॥ प्रातःअग्निप्रतिष्ठांतंकृत्वाइदंविष्णुरितिमंत्रेणघृताक्तपायसेनघृताक्ततिलैश्चप्रत्येकमष्टोत्तरसहस्रंशतंहुत्वाकपिलां
गांदत्त्वा चतुर्विंशतिब्राह्मणान्केशवादिनामभिःसंपूज्यकेशवादिनामांकितांश्चतुर्विंशतिकलशान्पक्वान्नपूरितान्वस्त्रदक्षिणायुतान्दद्या
दिति॥उद्यापनंतुप्रबोधिन्यांमार्गशीर्षेभीमतिथौमाघेवैशाखेवित्तसमृद्धौशुभतिथौवाकुर्यात्। इतिपाद्मात् ॥इति श्रीमच्छांकर्यांव्रतोद्या
पनकौमुद्यामेकादशीव्रतम् ॥ छ ॥ ॥अथप्रतिपद्व्रतानिलिख्यंते। चैत्रप्रतिपदिआरोग्यव्रतम्। भविष्ये। तत्रसंवत्सरावसानेपंचदश्याम्

पोषितः प्रतिपदिप्रातःस्नात्वातिथ्यादिसंकीर्त्यआत्मनआरोग्यादिप्राप्तिकामनयासूर्यप्रीत्यर्थमारोग्यप्रतिपद्व्रतंकरिष्यइति संकल्प्य पंचवर्णनिर्मितपद्मेभास्करंसांगंसंपूज्य पायसाद्युपहारंनिवेद्यसदन्नेनब्राह्मणान्संतर्प्य दिनचतुर्थभागेस्वयंसघृतमेकमेवग्रासंभक्षयित्वाअवशिष्टान्नंत्यजेत् ब्राह्मणानुमत्यावाघृतवर्ज्यंभुंजीत॥ एवंत्रयोदशवर्षंकृत्वा उद्यापनप्रकारेण अंतेसौवर्णींसूर्यप्रतिमांसंपूज्यब्राह्मणान्संभोज्यव्रतपूर्तयेगांब्राह्मणायदद्यात् ॥ इतिआरोग्यव्रतम् ॥ ॥ अथविद्याव्रतंस्कांदे ॥ चैत्रशुद्धप्रतिपदितिथ्यादिसंकीर्त्यआत्मनःसांगविद्याप्राप्तिकामो ब्रह्मप्रीत्यर्थंविद्याव्रतंकरिष्यइतिसंकल्प्यपंचवर्णरचितेष्टपत्रपद्मेकर्णिकायां ब्रह्मजज्ञानमितिब्रह्माणंपूर्वपत्रेऋग्वेदं दक्षिणेयजुर्वेदं पश्चिमेसामवेदमुत्तरेअथर्ववेदमाग्नेयेअंगानिनैर्ऋत्येधर्मशास्त्राणि पुराणानिवायव्ये ईशान्येन्यायविस्तरान्तत्तन्मंत्रैरावाह्यसंपूजयेत् ब्राह्मणान्संभोज्यस्वयमुपवासंकुर्यात् ॥ एवंद्वादशमासस्थशुक्लप्रतिपत्सुकुर्यात्॥ अंतेसर्वतोभद्रस्थकलशेसौवर्णब्रह्माणंसंपूज्यगांदत्त्वा विप्रान्सदन्नेनभोजयेत् स्वयमपिआशिषोगृहीत्वाभुंजीयादिति ॥ इतिविद्याव्रतम्॥अथरोटकसोमवारव्रतंभविष्ये॥श्रावणशुक्लप्रतिपत्सोमवारयुतायदातदाकार्यम् प्रथमसोमवासरेवा सार्धमासत्रयंकार्यम्॥ अधिकसौभाग्यसंपूर्णसंपत्तिकामः सोमेशप्रीत्यर्थंरोटकसोमवारव्रतंकरिष्यइतिसंकल्प्यकार्तिकशुक्लचतुर्दशीपर्यंतंप्रत्यहंबिल्वदलैःसांबंसंपूज्यकार्तिकशुक्लचतुर्दश्यामुपोष्यरात्रौदेवंपंचामृतपुरःसरंनानापुष्पादिभिःसंपूज्यप्रातःपुरुषाहारसंमितरोटकपंचकंकृत्वाद्वौब्राह्मणायएकंदेवायद्वौआत्मने एवंवर्षपंचकंकृत्वाअंतेराजतंसांबमुद्यापनविधिनासंपूज्यहेमरौप्यरोटकौयथाशक्तिकृत्वाआचार्यंसंपूज्यव्रतपूर्तये तस्मैदत्त्वागांचदत्त्वाब्राह्मणान्भोजयेदिति ॥ इति रोटकसोमवारव्रतम् ॥ इतिश्रीमच्छांकर्यांप्रतिपद्व्रतानि ॥ छ ॥ अथद्वितीयाव्रतानि ॥ तत्रभविष्ये॥ कार्तिकशुक्लद्वितीयाय

मद्वितीया ॥ साअपराह्णव्यापिनीग्राह्या दिनद्वयव्याप्तौअव्याप्तौपरैव प्रातःसाभ्यंगंस्नात्वाआत्मनःअवैधव्यभ्रात्रायुष्यवृद्धिप्राप्तिका
मनयायमपूजांकरिष्यइतिसंकल्प्य पटेचंदनादिनायमंचित्रगुप्तंयमदूतांश्चविलिख्यपूजयेत् ॥ ततोभ्रातृभगिनीभिर्यमायअर्घोदेयः ॥
अर्घ्यमंत्रस्तु । " एह्येहिमामंबुजपाशहस्तयमांतकालादिभिरन्वितेश ॥ भ्रातृद्वितीयांकृतदेवपूजांगृहाणचार्घ्यंभगवन्नमस्ते ॥ धर्मरा
जनमस्तुभ्यंनमस्तेयमुनाग्रज ॥ त्राहिमांकिंकरैःसार्द्धंसूर्यपुत्रनमोस्तुते ॥ " भ्राताभगिनींप्रतोष्यवस्त्रादिना तद्गृहेभुक्त्वा ततोभगि
नीआशिषःप्रार्थयेत्॥ मार्कंण्डेयमहाभागसप्तकल्पांतजीवन ॥ चिरजीवीयथात्वंहितथामेभ्रातरंकुरु ॥ इति ॥ ॥ अथसुकृतफलम् ॥
भविष्ये । श्रावणशुद्धद्वितीयायांभृगुवासरयुतायांचंद्रोदयव्यापिन्यांकार्यम् ॥ व्रतस्यग्रहणं देशकालौसंकीर्त्यममअखिलपापक्षयपूर्व
कपुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वारालक्ष्मीनारायणप्रीतयेवर्षत्रयाचरितस्यसुकृतफलव्रतस्य संपूर्णतासिद्ध्येतदुद्यापनाख्यंकर्मकरि
ष्य इतिसंकल्य पूर्वोक्तप्रकारेणआचार्यःसर्वतोभद्रस्थकलशेसौवर्णंविष्णोर्नुकमितिमंत्रेणनारायणंसकुमिवतितउनेतिलक्ष्मींच सम्पू
ज्य सुवर्णफलयुतं वंशपात्रस्थवाणकंपुरतः संस्थाप्य रात्रिंनिनयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ नारायणंलक्ष्मींच तिलस
र्पिर्भ्यामष्टोत्तरशतसंख्याकाहुतिभिः प्रतिद्रव्यंब्रह्मादिमंडलदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ स्थापनमंत्राभ्यांहोमयेत् ॥ ततः
आचार्यंसंपूज्यवायनंदद्यात् ॥ पंचामृतयुतानिगोधूमानिउदुंबरफलसदृशानिषष्ट्यधिकशतत्रयपरिमितानितावंतिसौवर्णानिच सवस्त्रा
णिदक्षिणासौभाग्यद्रव्ययुतानिसुकृतफलयुतानिवंशपात्रस्थानिपायसपूर्णकांस्यपात्रसहितानि अनेनमंत्रेणदद्यात् ॥ पुत्रपौत्रसमृद्ध्य
र्थंसौभाग्यारोग्यसिद्धये ॥ वाणकंसंप्रदास्यामिव्रतसंपूर्णहेतवे ॥ लक्ष्मीनारायणोदेवअस्मात्संसारसागरात् ॥ रक्षतात्सकलात्पापात्पुण्यं

सर्वंददातुच ॥ श्रावणेचद्वितीयायांसुभद्रार्चितमाधव ॥ सुकृद्दानफलंमेद्यसफलाश्चमनोरथाः ॥ श्रीकृष्णःप्रतिगृह्णातिश्रीकृष्णो
वैददातिच ॥ श्रीकृष्णस्तारकोभाभ्यांश्रीकृष्णःप्रियतामिति ॥ ततःकपिलांगांदत्त्वाचतुर्विंशतिब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृ
हीत्वास्वयंभुंजीत ॥ ॥ अथभविष्येबालचंद्रव्रतम् ॥ तच्चमार्गशीर्षशुद्धद्वितीयायांचंद्रोदयव्यापिन्यांकार्यम् ॥ देशकालौसंकीर्त्यआ
त्मनःअवैधव्यपुत्रपौत्रसौभाग्यलक्ष्मीकामनया सोमराजप्रीत्यर्थंद्वादशवर्षपर्यन्तमाचरितंयद्बालचंद्रव्रतंतस्यसंपूर्णतासिद्धये तदुद्या
पनाख्यंकर्मकरिष्ये ॥ ततोवृताचार्यःसर्वतोभद्रस्थकलशेसौवर्णमाप्यायस्वेतिमंत्रेणविधुं संपूज्य ॥ क्षीरोदार्णवसंभूतलक्ष्मीबंधोनि
शाकर ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ इतिअष्टांगार्घ्यंदत्त्वाप्रार्थयेत् ॥ सोमराजनमस्तुभ्यंक्षीराब्धिमथनोद्भव ॥
व्रतेनक्रियमाणेनतुष्टोभवनिशापते॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ सोमराजंपलाशसमित्तिलयवाज्यैरष्टोत्तरशतसंख्याकाहुति
भिः प्रतिद्रव्यंब्रह्मादिदेवताश्चएकैकयाआज्याहुत्यायक्ष्ये ॥ स्थापनमंत्रेणहुत्त्वागांवायनंचदत्वा ब्राह्मणान्भोजयेदिति ॥ इतिव्र
तोद्यापनकौमुद्यांद्वितीयाव्रतानिसमाप्तानि ॥ छ ॥ ॥ अथतृतीयाव्रतानि ॥ भविष्ये पूर्वाह्णव्यापिन्यांचैत्रशुद्धतृतीयायांसौभाग्यश
यनव्रतंद्वादशअष्टौसप्तवावर्षाणिकार्यम् ॥ प्रातःशुक्लतिलैःस्नात्वादेशकालौसंकीर्त्याऽऽत्मनः भर्त्रासहएकशय्यासनशयनभोगसौभा
ग्यपुत्रपौत्राद्यभिप्राप्तयेउमामहेश्वरप्रीत्यर्थंसौभाग्यशयनव्रतंकरिष्यइतिसंकल्प्यउमामहेश्वरयोःप्रतिमांसौवर्णींम्पूजाविधिनापंचामृतपु
रःसरंतत्तन्मंत्राभ्यांपीठेसंपूज्य अंगपूजामारभेत्॥पाटलायै० शिवायन० पादौपूजयामि एवंसर्वत्र ॥ जयायै० शिवायै० गुल्फौपू० त्रि
गुणायै०भवान्यै०जंघायुग्मं०रुद्राय०जयायै०जानुनीपू०हरिकेशाय०वरदाय० ऊरूपू०ईशानाय०रत्यै०कटी० शूलिने० कोटरायै०

कुक्षिद्वयं० शूलपाणये० मंगलायै० उदरं० सर्वात्मने० ईशान्यै० कुचद्वयं० वेदात्मने० रुद्राण्यै० कंठं० त्रिपुरघ्नाय० विश्वायै० करद्वयं० हरा
य० भवान्यै० नासायुग्मम्० उग्राय० ललितायै० भ्रूयुग्मं० शर्वाय० देव्यै० कर्णद्वयं० श्रीकंठाय० शिवायै० केशान्० भीमाय०
सर्वात्मने० शिरःपू० इतिसंपूज्य० पुरतःसौभाग्याष्टकंस्थापयेत् ॥ घृतनिष्पावकुसुंभक्षीरजीरकतृणराजेक्षुलवणधान्यानिचैत्रे
गोशृंगोदकंप्राश्यभूमौस्वपेत् पुनःप्रभातेसंपूज्यदेवंद्विजंदांपत्यंवस्त्रादिनासंपूज्य सौभाग्याष्टकयुतंसुवर्णप्रतिमाद्वयंसदक्षिणाकंललिता
प्रीयतामितिवदन् ब्राह्मणायदद्यात् ॥ एवंप्रतिमासंतृतीयायांप्राशनेदानमंत्रेचपुष्पेचविशेषः॥ चैत्रादिद्वादशमासेषुक्रमेण गोशृंगोदकं
गोमयंमंदारकुसुमंबिल्वपत्रंदधिकुशोदकंक्षीरंपृषदाज्यंगोमूत्रंघृतंकृष्णतिलान्पंचगव्यं ॥ ललितायै० विजयायै० भद्रायै० भवान्यै०
कुमुदायै० शिवायै० वासुदेव्यै० गौर्यै० मंगलायै० कमलायै० सत्यै० उमायै० ॥ पुष्पाणिक्रमेण मल्लिका० अशोकं० कमलं० कौसुंभं०
नीलोत्पलं० मालती० कुब्जकं० करवीरं० बाणं० चंपकं० सिंदूरवारं० जपा० ॥ एतेषामभावेकरवीरंसर्वत्र ॥ व्रतांगेषुसर्वोपस्करयु
तेशयनेहैममुमामहेश्वरंगोयुग्मंचहैमंपुरतःसंपूज्य ततोवस्त्रादिनादंपतीसंपूज्यदद्यात् ॥ सुखसंतानवृद्ध्यर्थंशयनंतेद्विजोत्तम ॥ ददा
मिव्रतपूर्त्यर्थंप्रीयेतांमेह्युमेश्वरौ ॥ इति । अन्यानपिदंपतीन्यथाविभवंसंपूज्य गांचसवत्सांदत्त्वाब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृही
त्वास्वयंभुंजीत ॥ अथस्कांदे मध्याह्नव्यापिन्यांचैत्रशुक्लतृतीयायामरुंधतीव्रतम् ॥ तिथ्यादिसंकीर्त्य आत्मनःअवैधव्यसौभाग्यपुत्रपौ
त्रावाप्तिकामनया अरुंधतीव्रतंकरिष्ये ॥ पूर्वंत्रिरात्रोपोषितोनक्ताशीवावृताचार्यः सर्वतोभद्रमंडलेजीरकपुंजेलवणान्वितेवस्त्रयुग्मवेष्टिते
कलशेहैमेवासिष्ठारुंधतीप्रतिमेनाममंत्रेणप्रतिष्ठाप्यउपचारैःसंपूज्यअंगपूजांकुर्यात् ॥ वेदवंद्यायैनमःपादौपूजयामि लोकवंद्यायै० जा

तुनी० संपत्तिदायै० कटी० गंभीरनाभ्यै० नाभिं० लोकधात्र्यै० स्तनौ० जगद्धात्र्यै० कंठं० शांत्यै० बाहू० वरदायै० हस्तौ० धृ
त्यै० मुखंपू० अरुंधत्यै० शिरःपू० वसिष्ठप्रियायै० सर्वांगंपू० ॥ उत्तरार्घ्यम् ॥ अरुंधतिमहाभागेवसिष्ठप्रियवादिनि ॥ सौभाग्यंदेहि
मेदेविगृहाणार्घ्यंनमोस्तुते ॥ ततोनमस्कारः ॥ पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते ॥ अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते ॥ त
तःसुवासिनीःसंपूज्यप्रातर्होमंकुर्यात् ॥ अत्रप्रधानम् ॥ अरुंधतींसमित्तिलाहुतिभिः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिः ब्राह्मणादिदे
वताश्चैकैकाज्याहुत्यायक्ष्ये॥ततोहोमशेषंसमाप्यआचार्यंसंपूज्यघृतपूरितकांस्यपात्रंसदीपंपीठंचदत्त्वा चतुर्विंशतिंद्वादशयथाशक्तिवा
मिथुनानिसंपूज्य मोदकपोलिकापूरिकावटघृतपाचितपक्वान्नादिपूरितंसवस्त्रंसशूर्पंवायनंतेभ्योदत्त्वागांचदद्यात्॥ ॥अथभविष्ये मुहूर्त
मात्रेपिपरविद्धायांश्रावणशुक्लतृतीयायांस्वर्णगौरीव्रतम् ॥ प्रातःशुक्लतिलैःस्नात्वाआत्मनःसौभाग्यादिपुत्रपौत्रसंपत्तिप्राप्तिकामनया
चरितस्वर्णगौरीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःउक्तप्रकारेणलिंगतोभद्रेषोडशनमस्कारमंत्रेणनाममंत्रेणवापलताम्रमयतिलपूरितपू
र्णपात्रयुतेमृन्मयेकलशेहैमेहरगौरीप्रतिमेत्र्यंबकंगौरीर्मिमायेतिमंत्राभ्यांसंपूज्यपुराणपठनादिनारात्रिंनिनीयप्रातरग्निंप्रतिष्ठाप्यअन्वाद
ध्यात् ॥ उमामहेश्वरौतिलयवाज्याहुतिभिःप्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततआचार्या
यगांदत्त्वाषोडशदंपतीसंपूज्यवंशपात्रस्थषोडशविधषोडशसंख्याकपक्वान्नसंयुतंवायनंतेभ्योदत्त्वादक्षिणादिभिःप्रतोष्यआशिषोगृह्णी
यात् ॥ ॥अथभविष्यस्कंदयोर्मुहूर्तमात्रेपिपरविद्धायांभाद्रशुक्लतृतीयायांहरितालिकाव्रतम् ॥ तिथ्याद्युल्लिख्यममसमस्तपापक्षयपूर्व
कसप्तजन्मसौभाग्यादिविविधभोगप्राप्तिद्वाराउमामहेश्वरप्रीत्यर्थमाचरितहरितालिकाव्रतोद्यापनंकरिष्ये ॥ ततोवृताचार्यः उक्तविधि

नालिंगतोभद्रेद्रोणपरिमितव्रीहिस्थकलशेराजतंशिवंहैमींगौरींपुरतोराजतंवृषमुक्तमंत्रैःप्रतिष्ठाप्यसंपूजयेत् ॥ तत्रमंत्रः ॥ मंदारमालाकु
लितालकायैकपालमालांकितशेखराय ॥ दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥ तत्तन्मंत्रैर्वाततःप्रार्थयेत् ॥ नमःशि
वायसांबायपंचवक्त्रायशूलिने॥नंदिभृंगिमहाकालगणयुक्तायशंभवे॥शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे ॥नमस्तेब्रह्मरूपिण्यैजगद्धात्र्यै
नमोनमः ॥ येनकामेनदेवित्वंपूजितासिमहेश्वरि ॥ तंपूर्णंकुरुमेकामंसौभाग्यंचप्रयच्छमे ॥ ततःसुवासिनीभिःसंपूज्यरात्रिंनिनयेत् ॥
प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानम् ॥ उमामहेश्वरंप्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिःतिलयवाज्याहुतिभिः ब्रह्मादिदे
वताःपरिवारदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ ततःसंपूजिताचार्यायगांदत्त्वाषोडशाष्टौवायुग्मानिसंपूज्य सौभाग्यद्रव्यवस्त्रदक्षिणायु
तानिसशूर्पाणिषोडशवायनानिदद्यात् ॥ तत्रमन्त्रः ॥ सौभाग्यारोग्यकामानांसर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्य
हम् ॥ अथहस्तगौरीव्रतम् ॥ भविष्ये । हस्तऋक्षगतेसूर्येत्रयोदशवर्षात्मकंहस्तगौरीव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलदुः
खनाशसौभाग्यसुखावाप्तिद्वारागौरीप्रीत्यर्थमाचरितहस्तगौरीव्रतपूर्णतासिद्ध्ये तदुद्यापनाख्यंकर्मकरिष्ये ॥ वृताचार्यः लिंगतोभद्रे
उक्तप्रकारेणकलशेकांचनगजेगौरींहरंगणेशंचसौवर्णसुवर्णपुष्पादिनातत्तन्मंत्रैःसंपूज्यसुवासिनीःसंपूजयेत् ॥ अग्निंप्रतिष्ठाप्यअन्वाद
ध्यात् ॥ गौरींहरंगणेशंचअष्टोत्तरशततिलाज्याहुतिभिः ब्रह्मादिदेवताःएकैकयाज्याहुत्यायक्ष्ये ॥ वायनंत्रयोदशविधत्रयोदशसंख्या
कपक्कान्नपूरितंसौवर्णपात्रैर्वैणवैर्वाकृत्वात्रयोदशदंपतीः सुवासिनीर्वासंपूज्यतेभ्योदद्यात् ॥ तत्रमंत्रः ॥ पक्कान्नपूरितंविप्रव्रतसंपूर्णहेत
वे ॥ वायनंतेप्रयच्छामिगौरीगिरिशतुष्टये ॥ गांदद्यात् ॥ अथकोटीश्वरीव्रतम् ॥ भाद्रपदशुक्लतृतीयायांभविष्ये ॥ तत्तुवर्षचतुष्ट

यंकार्यम् ॥ तत्रविधिः ॥ आत्मनोदुर्भगत्वनाशनसुभगत्वप्राप्तिकामनया गौरीप्रीत्यर्थंकोटीश्वरीव्रतंकरिष्ये ॥ अखंडानांतंडुलानां
तिलानांवालक्षमेकंपयसिपक्ववातदन्नेनदेवींनिर्मायोक्तप्रकारेणपीठेसंपूज्यरक्तवस्त्रंदत्त्वाविशेषपूजांकुर्यात् ॥ तत्रमंत्रः ॥ नमोनमस्ते
देवेशिलक्षेश्वरिनमोस्तुते ॥ कोटीश्वरिनमस्तुभ्यंनमस्तेहरिवल्लभे ॥ ततोऽर्घ्यम् ॥ नमोलक्षेश्वरिदेविकोटीश्वरिनमोस्तुते ॥
गृहाणार्घ्यंमयादत्तंदुर्गेदेविनमोस्तुते ॥ ततःसुवासिनीःसंपूजयेत् ॥ व्रतांतेगांचदद्यात् ॥ अथभविष्ये चंद्रोदयव्यापिन्यांभा
द्रकृष्णतृतीयायांबृहद्गौरीव्रतम् ॥ तच्चवर्षपंचकंकार्यम् ॥ तिथ्यादिसंकीर्त्यभर्त्रायुर्वृद्धिपुत्रपौत्रसौभाग्यादिप्राप्तिकामनयाऽऽचरि
तबृहद्गौरीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यः उक्तप्रकारेणालवाले सांगंबृहतीवृक्षंसंस्थाप्यसंपूज्य तत्पुरतः पीठेहैमीमुमांगौरीर्मि
मायेतिमंत्रेणसंपूज्य तत्पुरतः चतुःषष्टिबीजयुतंसौवर्णंबृहतीफलंसंपूज्यार्घ्यंदद्यात् ॥ मंत्रः ॥ क्षेमसंपत्करेदेविसर्वसौभाग्यदा
यिनि ॥ सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते ॥ चंद्रोदयोत्तरेअर्घ्यम् ॥ गगनांगणसंदीपलक्ष्मीबंधोनिशाकर ॥ गृहाणार्घ्यं
मयादत्तंरोहिण्यासहितःशशिन् ॥ ततःअग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ गौरीमष्टोत्तरशतसंख्याकघृताक्ततिलाहुतिभिः ब्रह्मादिदेव
ताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ ततःपंचविप्रान्सुवासिनीःसंपूज्यकंचुकीताटंकंकंठसूत्रंसौभाग्यद्रव्यंसिंदूरजीरकगोधूमपिष्टजाती
बृहतीफलपंचकयुक्तानिसूत्रवेष्टितवंशपात्रयुग्मयुतानिसवस्त्रदक्षिणानिपंचवायनानिदत्त्वागांचदत्त्वासदन्नेनब्राह्मणान्संतर्प्य तत्सुवर्ण
निर्मितंबृहतीफलंकंठेधृत्वाइष्टजनैःसहभुंजीत ॥ अथमार्गशीर्षेमाघेवाकृष्णगततृतीयायां सौभाग्यसुन्दरीव्रतम् ॥ तच्चतुर्थीयुतायांका
र्यम् ॥ तिथ्यादिसंकीर्त्यआत्मनःसर्वदुःखव्याधिदारिद्र्यादिनाशनपूर्वकसुखसौभाग्यपुत्रपौत्रसुरूपतादिप्राप्तिद्वारागौरीप्रीत्यर्थंसौभा

ग्यसुंदरीव्रतंकरिष्यइतिसंकल्प्य ततउमामहेश्वरंसौवर्णंराजतंवाकृत्वा एकलिंगोद्भवेमंडलेवक्ष्यमाणद्रव्यैर्द्वादशमासेषुप्रतितृतीयायां
संपूजयेत् ॥ मार्गशीर्षेकृष्णतृतीयायांप्रातःअपामार्गदंतकाष्ठंसौभाग्यसुन्दरीदेवतानाम द्रोणपुष्पंदाडिमीफलेनार्घ्यंमोदकनैवेद्यंयक्ष
कर्दमलेपः अगरुधूपः घृतदीपः सर्वासुतृतीयासु एवंपूजांकृत्वास्वयंकर्पूरंप्राशयेत् ॥ एवंसर्वत्र ॥ पौषेवेलिकादंतकाष्ठंराज्यसौभा
ग्यदादेवता मरुबकपुष्पंधात्रीफलेनार्घ्यंघृतशर्करान्वितवटकनैवेद्यम् स्वयंकंकोलकंप्राशयेत् ॥ माघेबदरीदंतकाष्ठंरूपसौभाग्य
सुंदरीनाम चूतपुष्पं नालीकेरेणार्घ्यंशष्कुलीनैवेद्यंकस्तूरीभक्षणम् ॥ फाल्गुनेबिल्वदंतकाष्ठं सौभाग्यसुंदरीनाम कांचनारपुष्पं घृत
शर्करान्वितसक्तुनैवेद्यं बीजपूरेणार्घ्यं चंदनोदकप्राशनम् ॥ चैत्रेजंबूदंतकाष्ठं सुखसौभाग्यसुंदरीनाम दमनकपुष्पंशर्कराघृतयुतमं
डकनैवेद्यं बिल्वफलेनार्घ्यमर्जुनपत्रभक्षणम् ॥ वैशाखेमालतीदंतकाष्ठं पतिसौभाग्यदानाम सितारक्तपद्ममल्लिकापुष्पं शर्कराघृ
तकर्पूरयुतदधिभक्तनैवेद्यं कदलीफलेनार्घ्यं सुवर्णोदकप्राशनम् ॥ ज्येष्ठेयूथिकादंतकाष्ठं लावण्यसुभगानाम कदलीफलेनार्घ्यं घृतपूरि
कानैवेद्यं मौक्तिकांबुप्राशनम् ॥ आषाढे अशोककाष्ठं पतिसौभाग्यसुंदरीनाम बिल्वपत्रं जंबूफलार्घ्यंपायसनैवेद्यंविद्रुमांबुप्राशनम् ॥
श्रावणे बिल्वकाष्ठं सर्वेश्वरीनाम जातीपुष्पं शुभ्रकसारनैवेद्यं कदलीफलार्घ्यम् रजतांबुप्राशनम् ॥ भाद्रेमातुलिंगकाष्ठं सौभाग्यसुं
दरीनाम उत्पलपुष्पं कर्कोटकीफलेनार्घ्यं शाकवर्तिन्यंनैवेद्यं माणिक्यांबुप्राशनम् ॥ आश्विनेप्लक्षकाष्ठं पुत्रसौभाग्यसुंदरीनाम श
तपत्रपुष्पम् नारिंगकूष्मांडार्घ्यम् घृतशर्करान्वितंगणकनैवेद्यम् औदुंबरांबुप्राशनम् ॥ कार्तिकेऔदुंबरकाष्ठं संयोगसुंदरीनाम केत
कीपुष्पं सुगंधिशालिनैवेद्यम् अक्रोडेनार्घ्यम् लवंगप्राशनम् ॥ एवंचीर्णेव्रतेमार्गकृष्णतृतीयायामुद्यापनम् ॥ पूर्वोक्तसंकल्पंकृत्वाआ

चार्यंवृत्वामंडलेउमामहेश्वरमूर्तिंपूर्वपूजितांरक्तवस्त्राद्युपचारैः संपूज्य प्रागुक्तपुष्पादिकंसमर्प्य जागरणादिनारात्रिंनिनयेत् ॥ प्रातः
अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अथप्रधानम् ॥ उमामहेश्वरौमधुत्रययुक्तैः कुसुंभकुसुमैः किंशुकैर्वाशतपत्रैर्वा अष्टोत्तरशतसं
ख्याकाहुतिभिःप्रतिदैवतंतत्तन्मंत्राभ्यां ब्रह्मादिदेवताश्चैकैकयाआज्याहुत्यायक्ष्ये ॥ ततः अष्टौचत्वारिवामिथुनानिवस्त्रादिभिः संपूज्य
तेभ्यः कुंकुमलवणगुडनारिकेरनागवल्लीदूर्वाकज्जलसिंदूराष्टकंशूर्पस्थंदत्त्वाऽऽचार्यायमंडलंगांचदत्त्वाप्रार्थयेत् ॥ पूजितासिमया
देविसर्वसौभाग्यसुंदरि ॥ दत्त्वामत्प्रार्थितान्कामान्गच्छदेवियथासुखम् ॥ ततःसदन्नेनब्राह्मणान्संतर्प्य आशिषोगृहीत्वास्वयं
भुंजीत ॥ ॥अथपरशुरामजयंतीव्रतं ॥ वैशाखशुक्लतृतीयायांनिशाद्ययामव्यापिन्यांभविष्ये ॥ तिथ्यादिसंकीर्त्य अखिलपापक्ष
यपूर्वकंचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थमाचरितपरशुरामजयंतीव्रतोद्यापनंकरिष्यइतिसंकल्प्य वृताचार्यःसर्वतोभद्र
स्थकलशेहैमंपरशुरामंविष्णोर्नुकमितिमंत्रेणसंपूज्यरात्रौजागरणंकृत्वा प्रातरग्निंप्रतिष्ठाप्यपरशुरामम् ॥ घृताक्तपायसद्रव्येणअष्टो
त्तरशतसंख्याकाहुतिभिःब्रह्मादिदेवताश्चएकैकयाआज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचदत्त्वाब्राह्मणान्भोजयेत् ॥ इतिपरशुरामजयं
ती ॥ इतिव्रतोद्यापनकौमुद्यांतृतीयाव्रतानि ॥ ७ ॥ ॥ अथचतुर्थीव्रतानि ॥ संकष्टचतुर्थीव्रतं चंद्रोदयव्यापिन्यांकार्यम् ॥ दिनद्वये
तद्व्याप्तावव्याप्तौवापूर्वा ॥ मासपक्षाद्युल्लिख्यविद्याधनपुत्रारोग्यमुक्तिसंकष्टनाशकामेन ॥ स्त्रीभर्त्रादिकामनयाचरितंसंकष्टीव्रतोद्यापनं
करिष्ये ॥ वृताचार्यउक्तप्रकारेणसर्वतोभद्रस्थकलशेहैमंगणेशंप्रतिष्ठाप्यपूजयेत् ॥ अथध्यानम्॥ लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकम् ॥
नानारत्नैःसुवेषाढ्यंप्रसन्नास्यंविचिंतये॥ध्यानं० ॥श्रीगणेशाय०आवाहयामि॥गणेशाय०आसनं० विघ्ननाशिने० पाद्यं०लंबोदराय०

अर्घ्यं०चंद्रार्धधारिणे०विश्वप्रियाय०आचम०ब्रह्मचारिणे०स्नानं०शूर्पकर्णाय० वस्त्रं० उपवीतं० कुजायन० चंदनंरुद्रपुत्रायपुष्पंच गुणशालिने॥ विकटायेतिधूपंचदीपंरुद्रप्रियायच ॥ नैवेद्यंविघ्ननाशायतांबूलंसिद्धिदायच॥ फलंसंकष्टनाशायएकदंतायदक्षिणाम्॥ नीराजनंवामनायप्रदक्षिणांहरसूनवे ॥ पुष्पांजलिंकुमारायनमोविद्याधरायच ॥ ततःशूर्पेपायससंपूर्णंरक्तवस्त्रेणवेष्टितंगणेशायनिवेद येत् ॥ ततश्चंद्रायार्घ्यम् ॥ तदानींपंचम्यांवाहोमंकुर्यात् ॥ प्रधानंगणपतिंगणानांत्वेतिमंत्रेणतद्गायत्र्यावादूर्वारक्ताक्षताआज्यमो दकपायसद्रव्यैःप्रतिद्रव्यमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिर्वातत्संख्याकाहुतिभिर्यक्ष्ये ब्रह्मादिदेवताश्चकेवलंमोदकैर्वा । एवंहो मंसमाप्य एकविंशतिब्राह्मणानेकविंशतिनामभिर्वस्त्रादिनासंपूज्यएकविंशतिपक्वान्नैःसंतर्पयेत् ॥ गणंजयःगणपतिःहेरंबःधरणीधरः महागणपतिःयक्षेश्वरःक्षिप्रप्रसादनःअमोघसिद्धिःअमृतःमंत्रःचिंतामणिःनिधिःसुमंगलःबीजम् आशापूरकःवरदःशिवःकाश्यपःनंदनः वाचांसिद्धिःढौंढीविनायकः ॥ ततआचार्यायशूर्पस्थैकविंशतिमोदकवायनंरक्तवस्त्रवेष्टितंदद्यात् ॥ मंत्रः ॥ विप्रवर्यनमस्तुभ्यंमोदका न्वैददाम्यहम् ॥ आपदुद्धरणार्थायगृहाणद्विजसत्तम ॥गणेशंप्रार्थयेत् ॥अबुद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतम् ॥ तत्सर्वंपूर्णतांयातुवि घ्नराजनमोऽस्तुते ॥ततोगांसोपस्करंपीठंचआचार्यायदत्त्वा आशिषोगृहीत्वाइष्टजनैःसहभुंजीत॥ इतिसंकष्टचतुर्थीव्रतम् ॥ श्रावणेका र्तिकेवाशुक्लचतुर्थ्यांदूर्वागणपतिव्रतंभविष्ये ॥ तिथ्याद्युल्लिख्यअतुलसौभाग्यपुत्रपौत्रधनैश्वर्याद्यभिवृद्धिद्वाराश्रीगणपतिप्रीत्यर्थंदूर्वा गणपतिव्रतोद्यापनंकरिष्ये॥ तच्चवर्षपंचकंवर्षत्रयंवाकार्यम्॥ तत्रविधिः॥ सर्वतोभद्रस्थरक्तवस्त्रवेष्टितताम्रकलशेहैमपीठेहैमींदूर्वांनिधा यतत्रहैमंगणेशंपूजयेत् ॥ विशेषःपूजायाम् ॥ बिल्वापामार्गशमीदूर्वातुलसीपत्रैर्मोदकनैवेद्यम् ॥प्रार्थनामंत्रः ॥ गणेश्वरगणाध्यक्ष

गौरीपुत्रगजानन ॥ व्रतंसंपूर्णतांयातुत्वत्प्रसादादिभानन ॥ प्रतिमादानमंत्रः ॥ गृहाणभगवन्ब्रह्मन्गणराजंसदक्षिणम् ॥ व्रतंत्वद्व
चनादद्यसंपूर्णयातुसुव्रत ॥ एवंपंचवर्षाणिकृत्वाउद्यापनमारभेत् ॥ पूर्ववत्पूजयित्वादूर्वायुक्तैर्दशभिर्मंत्रैर्गणेशंपूजयेत् ॥ पंचगव्य
स्नपनं ॥ दशमंत्राः ॥ गणाधिपाय०उमापुत्राय०अघनाशिने०विनायकाय०ईशपुत्राय० सर्वसिद्धिप्रदायकाय०एकदंताय०इभव
क्राय०मूषकवाहनाय०कुमारगुरवे०॥ततोव्रतपूर्तयेआचार्यायगांदत्त्वाभुंजीत॥ भाद्रपदशुक्लचतुर्थ्यांमध्याह्नव्यापिन्यांसिद्धिविनायक
व्रतम् ॥ माघेमार्गशीर्षेश्रावणेवाप्रतिमासंशुक्लचतुर्थ्यांप्रातःशुक्लतिलैःस्नात्वामध्याह्नेसंकल्पंकृत्वापूजयेत्॥देशकालौसंकीर्त्यममविज
यपुत्रादिकामसिद्धिद्वारा श्रीसिद्धिविनायकप्रीत्यर्थंसिद्धिविनायकव्रतंकरिष्ये ॥ धान्यराशिस्थरक्तवर्णवेष्टितारक्तकलशेहैमंगणेशं
पूजयेन्मूलमंत्रेण ॥ एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजम् ॥ पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकम् ॥ ध्यानं० ॥ पुष्पोत्तरमंगपूजा ॥
गणेशाय०पादौपू०विघ्नराजाय०जानुनी०आखुवाहनाय०ऊरू०हेरंबाय०कटीपू०कामारिसूनवे०नाभिं०लंबोदराय०उदरं० गौरीसुता
य०स्तनौ०गणनाथाय०हृदयं०स्थूलकंठाय०कंठं०स्कंदप्रियाय० स्कंधौ०पाशहस्ताय०हस्तौपू० गजवक्त्राय० मुखं०विघ्नहर्त्रेन०ने
त्रेपू०सर्वेश्वराय०शिरःपू०गणाधिपाय०सर्वांगंपू० ॥ अथपत्रपूजा ॥ सुमुखाय०पाचिपत्रंस०गणाधिपाय०भृंगराजपत्रं० उमापुत्राय
बिल्वपत्रं०गजाननाय०दूर्वाप०लंबोदराय०बदरीपत्रं० हरसूनवे०धत्तूरपत्रं०वक्रतुण्डाय०शमीप०गुहाग्रजाय०अपामार्गप०एकदंता
य०बृहतीप०विकटाय०करवीरप०विनायकाय०अश्मंतकपत्रं०कपिलाय०अर्कप०गजदंताय०अर्जुनप०विघ्नराजाय०विष्णुक्रांतप०
बटवे०दाडिमीप०सुराग्रण्ये०देवदारुप०भालचंद्राय०मरुवकप०हेरंबाय०सिंदूरप०चतुर्भुजाय०जातिप०सर्वेश्वराय० अगस्तिप० ॥

ततोदूर्वायुग्मं ०गंधपुष्पाक्षतयुतंगृहीत्वापूजयेत् ॥ गणाधिपाय०उमापुत्राय०अघनाशिने०विनायकाय० ईशपुत्राय० सर्वसिद्धिप्रदाय
काय० एकदंताय०इभवक्त्राय०मूषकवाहनाय०कुमारगुरवे०सर्वविघ्नहराय० ॥ ततोदेवंप्रार्थयेत् ॥ यन्मयाचरितंदेवव्रतमेतत्सुदुर्ल
भम् ॥ त्वत्प्रसादाद्गणेशत्वंसफलंकुरुसर्वदा ॥ घृतपाचितैकविंशतिमोदकान्गृहीत्वादशविप्रायदशआत्मनेएकंदेवाय ॥ वायनमंत्रः ॥
वाणकंफलसंयुक्तंमोदकैर्दशभिर्युतम् ॥गणेशप्रीणनार्थायतुभ्यंविप्रददाम्यहम् ॥ ततोब्राह्मणायदक्षिणांविनायकप्रतिमांदद्यात् ॥मंत्रः॥
विनायकगणेशानसर्वदेवनमस्कृत ॥ पार्वतीप्रियविघ्नेशममविघ्नंविनाशय ॥ एवमेकविंशतिवर्षंकृत्वांऽतेपूर्ववद्देवंसंपूज्य॥वृताचार्यः अ
ग्निम्प्रतिष्ठाप्यान्वादध्यात् ॥ गणेशंदूर्वापायसलड्डुकैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिर्यक्ष्ये ॥ ततःअधिकफलप्राप्तयेएकविंश
तिनामभिःएकविंशतिब्राह्मणान्दक्षिणापुरःसरंसंपूज्यएकविंशतिपक्वान्नैः प्रत्येकंसंपूज्यअन्यानपियथाविभवंसंपूज्यभूयसींदत्त्वाव्रतपूर्त
येगांदद्यात् इतिभविष्ये॥कार्तिककृष्णचतुर्थ्यांकरकचतुर्थीव्रतम् भविष्येस्त्रीणामेव॥तिथ्याद्युल्लिख्यात्मनःसौभाग्यपुत्रपौत्रादिसुस्थि
रश्रीप्राप्तयेकरकचतुर्थीव्रतंकरिष्ये ॥ पटादौवटंविलिख्यतदधस्ताच्छिवंस्कंदयुतांगौरींचंदनादिनालिखित्वापूजयेत् ॥ मंत्रः ॥ नमः
शिवायैसर्वायैसौभाग्यंसंततिंशुभाम्॥ प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे ॥ इति । नमोन्तनाममंत्रेणशिवस्कंदगौरीणांपूजाकार्या ।
पिष्टकनैवेद्यम् । पक्वान्नपूरितदशकरकानब्राह्मणेभ्योदद्यात्॥ चंद्रोदयोत्तरंचंद्रायार्घ्यंदद्यात्। व्रतपूर्तयेगांदत्त्वास्वयंभुंजीत॥ अथदशर
थललिताव्रतोद्यापनंस्कांदे आश्विनकृष्णचतुर्थ्याम्॥ तिथ्यादिसंकीर्त्यममपुत्रादिप्राप्तिपूर्वकसौभाग्याद्यभिवृद्धिद्वाराश्रीरोहिणीसहित
चंद्ररूपिश्रीपरमेश्वरप्रीत्यर्थंदशवर्षावधिआचरितस्यदशरथललिताव्रतस्योद्यापनंकरिष्यइतिसंकल्प्य वृताचार्यः रात्रौपुष्पमंडपिका

मध्ये सर्वतोभद्रेपूर्ववत्कलशंसंस्थाप्यतदुपरिवंशपात्रेचतुरंगुलांसौवर्णींरोहिणीप्रतिमामष्टांगुलराजतचंद्रप्रतिमांचपूर्ववत्पूजयेत्प्रार्थये
च्च ॥ दशरथायत्वयादत्तारामाद्याश्चसुताश्चते ॥ सौभाग्यंललितेदेविदेहितद्वन्ममापिहि ॥ पुष्पांतेंगपूजा ॥ उपांगललितायै०
पादौपूजयामि उमायै० जानुनी० सत्यै० नाभिं० कुमारिकायै० स्तनौ० लक्ष्म्यै० भुजौ० सुभगप्रियायै० मुखं० दशरथललितायै०
मूर्धानं० ॥ ततःप्रातःपुनःसंपूज्याऽग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ अत्रप्रधानं चंद्रसहितरोहिणींगौरीमिमायेतिमंत्रेणाष्टोत्तरशतदूर्वाहुति
भिः नमोदेव्यैइतिमंत्रेण अष्टोत्तरशतघृताक्तपंचखाद्याहुतिभिश्चयक्ष्ये ॥ ब्रह्मादिमंडलदेवताश्चैकैकयाहुत्यायक्ष्ये ॥ ततःसपत्नीका
न्दशब्राह्मणान्वस्त्रालंकारादिभिःसंपूज्य सुगंधोदकपूरितदशकरकान्दद्यात् ॥ ततआचार्यंवस्त्रादिभिःसंपूज्यसदक्षिणंवायनंदद्यात् ॥
तत्रमंत्रः ॥ इदंतुदशलड्डूकंदक्षिणाफलसंयुतम् ॥ ललिताप्रीणनार्थायब्राह्मणायददाम्यहम् ॥ विसर्जनमंत्रः ॥ सवाहनाशक्तियुताव
रदापूजितामया ॥ मातर्मामनुगृह्याद्यगम्यतांनिजमंदिरम् ॥ इतिविसृज्य ॥ सदक्षिणंसोपस्करंपीठंगांचदत्त्वाब्राह्मणान्मोदकपायसा
दिभिःसंतर्प्य आशिषोगृहीत्वास्वयंभुंजीत ॥ एवंयःकुरुतेभक्त्याधनपुत्रानवाप्नुयात् ॥ इतिदशरथललिताव्रतोद्यापनंसंपूर्णम् ॥ इति
चतुर्थीव्रतानि ॥ छ ॥ अथपंचमीव्रतानि ॥ भाद्रपदशुक्लपंचम्यामृषिपंचमीव्रतम् ॥ मध्याह्नव्यापिन्यांदिनद्वयेतद्व्याप्तावव्याप्तौ
वापूर्वविद्धायांकार्यम् ॥ नद्यादौप्रातर्दंतधावनपूर्वकंस्नात्वा ॥ ममज्ञानतोऽज्ञानतोवारजस्वलावस्थायांकृतसंपर्कजनितदुर्योनित्व
दोषपरिहारद्वाराशुभफलप्राप्त्यर्थमाचरितऋषिपंचमीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःसर्वतोभद्रेसप्तकलशेषुएकस्मिन्वाहैमीःअरुन्ध ॥ २० ॥
तीसहिताःसप्तर्षिप्रतिमाःपूजयेत् ॥ प्रत्येकंसप्तर्षीणांवेदोक्तमंत्राः ॥ ऋषेमंत्रकृतांस्तोमैरितिकश्यपम् । अत्रिर्यद्वामवेतिअत्रिम् ।

एवानस्पृधइतिभरद्वाजम् । प्रसूतोभक्षमकरंचरेतीतिविश्वामित्रम् । अभित्वागोतमांगिरेतिगौतमम् । गृणानाजमदग्निनेतिजमदग्निम् ।
उतासिमैत्रावरुणोवसिष्ठेतिवसिष्ठम् । कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः ॥ जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती ॥ इति ॥ दे
वाएतस्येतिसहस्तोमाःसहच्छंदसइतिनाममंत्रैर्वापूजयेत् ॥ ततोऽवायनंदत्त्वाक्षमापयेत् ॥ न्यूनातिरिक्तकर्माणिमयायानिकृतानिच ॥
क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधनाः ॥ ततःकथाश्रवणादिनारात्रिंनिनयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानम् ॥ अरुंध
तीसहितकश्यपादिसप्तर्षीन्पूजामंत्रेणतिलव्रीहियवसर्पिर्द्रव्यैः प्रतिद्रव्यमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिर्वा तत्संख्याकाहुतिभिः
ब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतम् ॥ ततःपुनःप्रतिमापूजांकृत्वासपत्नीकान्सप्तब्राह्मणान्वस्त्रादिनासंपूज्य
तेभ्यःक्रमेणदक्षिणाप्रतिमायुतकलशान्दद्यात् ॥ मंत्रः ॥ प्रतिगृह्णद्विजश्रेष्ठप्रतिमादिसमन्वितम् ॥ कलशमृषिसंप्रीत्यैव्रतसंपूर्तिहेत
वे ॥ यदैककुंभेसर्वप्रतिमापूजनंतदासर्वप्रतिमायुतंकलशमाचार्यायदद्यात् अन्येभ्योदक्षिणावस्त्रयुतान्पक्वान्नपूरितान्कलशान्दद्यात् ॥
ततःसप्तभ्यःसप्तगाआचार्यायएकांगांदत्त्वाप्रार्थयेत् ॥ सप्तर्षयःशुभाःश्रेष्ठाःसर्वेषांचशुभप्रदाः ॥ सर्वपापंचमेघ्नंतुज्ञानतोऽज्ञानतःकृतम् ॥
एतेसप्तर्षयःसर्वेभक्त्यासंपूजितामया ॥ यथोक्तफलदाःसंतुव्रतस्यफलदायकाः ॥ इति । ततोआशिषोगृहीत्वाब्राह्मणान्संतर्प्यस्वयंभुं
जीत ॥ अथभविष्येनागपंचमीव्रतम् ॥ तच्चश्रावणशुक्लपंचम्यांमध्याह्नव्यापिन्यांकार्यम् ॥ नद्यादौस्नात्वातिथ्याद्युल्लिख्यममसंतान
वृद्धिपूर्वकसुखाद्यभिवृद्धिद्वाराश्रीनागरूपिपरमेश्वरप्रीत्यर्थंनागपंचमीव्रतंकरिष्ये ॥ पटेचंदनादिनानागान्विलिख्यमृन्मयान्वाकृत्वाद
धिदूर्वाऽक्षतकुशादिभिःसंपूजयेदनेननमंत्रेण ॥ अनंतंवासुकिंशेषंपद्मनाभंमहाबलम् ॥ कालियंतक्षकंचैवकर्कोटकधनंजयौ ॥ एवंसंपूज्य

विप्रेभ्योभोजनंदत्त्वास्वयंतैलपक्वविवर्जितंभोजनंकृत्वारात्रौतद्ध्यानरतःस्वपेत् ॥ भाद्रशुक्लपंचम्यांनागपंचमीव्रतं प्रभासखंडे ॥ चतुर्थ्यामेकभक्तंकृत्वापंचम्यांप्रातःस्नातःदेशकालौसंकीर्त्य ॥ ममसंतत्यभिवृद्धिपूर्वकंसौभाग्यवृद्धिद्वाराश्रीनामरूपीपरमेश्वरप्रीत्यर्थं द्वादशवर्षात्मकंनागपंचमीव्रतंकरिष्ये ॥ ततःसौवर्णंराजंतदारुमयंमृन्मयंवापंचफणंनागंकृत्वा करवीरशतपत्रजातीपुष्पपद्मगंधादिभिःसंपूज्यब्राह्मणान्घृतपायसैःसंतर्प्य स्वयंनक्तंकुर्यात् एवंप्रतिमासम् । मासनामानि॥ अनंतंवासुकिंशेषंपद्मंकंबलमेवच॥ तथाकर्कोटकंनागंनागमश्वतरंतथा ॥ धृतराष्ट्रंशंखपालंकालियंतक्षकंतथा ॥ पिंगलंचमहानागंमासिमासिप्रकीर्तिताः ॥ एवंद्वादशवर्षंसंपाद्यांते भारपरिमितसुवर्णनागंसंपूज्य व्यासरूपिणेब्राह्मणायपूजापूर्वकंदद्यात् ॥ अंतेपायसादिनाब्राह्मणान्संतर्प्यस्वयंभुंजीत ॥ अत्रैवनागदष्टव्रतंहेमाद्रौभविष्ये ॥ चतुर्थ्यामेकभक्तंकृत्वाप्रातःपंचम्यांस्नात्वातिथ्याद्युल्लिख्य अस्मत्संबंधिनागदष्टमृतप्राप्तसर्पयोनिमुक्तिपूर्वकतत्स्वर्गतिकामनयाएकवर्षात्मकंनागदष्टपंचमीव्रतंकरिष्ये ॥ ततःसौवर्णंराजतंमृन्मयंवापंचफणंनागंनिर्माययक्षीरादिस्नपनपूर्वकषोडशोपचारैःसंपूज्यघृतपायसमोदकैर्ब्राह्मणान्संतर्प्यस्वयंनक्तंकुर्यात् पंचम्यांनक्तम् ॥ एवंप्रतिमासंपंचम्यांकार्यम् ॥ मासनामानिपूर्वोक्तानिअनंतादीनिग्राह्याणि ॥ संवत्सरांतेरत्नचित्रितंकांचनंनागंसर्वतोभद्रस्थकलशेसंस्थाप्यपूर्ववत्पूजयित्वारात्रौजागरणंकृत्वाषष्ठ्यां प्रातःसंपूज्यकथावाचकायसोपस्करंपीठंगांदचद्यात् ॥ तत्रमंत्रः ॥ दानकालेपठेदेतत्स्मरन्नारायणंप्रभुम् ॥ सर्वगंसर्वधातारमनंतमपराजितम् ॥ येकेचिन्मेकुलेसर्पैर्दष्टाःप्राप्ताह्यधोगतिम् ॥ व्रतेनानेनगोविंदमुक्तिभाजोभवंतुते ॥ इत्युक्त्वासितचंदनाक्षतयुतमुदकमुदके निक्षिपेत् ॥ ततोब्राह्मणानांचयतीनांचनागानुद्दिश्यमहाभोज्यंदत्त्वाआशिषोगृहीत्वास्वयंभुंजीत सर्पयोनेर्मुक्तोभवति ॥ आश्विनशुक्ल

पंचम्यांमध्याह्नव्यापिन्यामुपांगललिताव्रतम् ॥ प्रातर्दंतधावनपूर्वकंनद्यादौस्नात्वाशुक्लंवासःपरिधाय मंडपिकादिकंकृत्वातिथ्यादिकं संकीर्त्य॥मयापुत्रपौत्रविद्याऽऽरोग्यसुखविजयपुष्ट्यादिकामेन स्त्रीत्ववैधव्यकामनयोपांगललिताप्रीत्यर्थमष्टवर्षात्मकाचरितोपांगललिताव्रतोद्यापनंकरिष्यइतिसंकल्प्य वृताचार्यएकलिंगोद्भवेकलशोपरिसौवर्णींललिताप्रतिमांपूजयेत् पौराणमंत्रैःश्रीसूक्तेनच ॥ ध्यानं ॥ नीलकौशेयवसनांहेमाभांकमलासनाम् ॥ भक्तानांवरदांनित्यंललितांचिंतयाम्यहम् ॥ पुष्पपूजांते ॥ उपांगललितायै०पादौपू०भवान्यै०गुल्फौ०सिद्धेश्वर्यै०जंघे०श्रियै०ऊरू०विश्वरूपिण्यै०कटी०देव्यै०नाभिं०वरदायै०कुक्षिं०शिवायै०हृदयं०वागीश्वर्यै० स्कंधौ० महादेव्यै०बाहू०प्रकृतिभद्रायै०करौ०पद्मिन्यै०कंठं०सरस्वत्यै०मुखं०पद्मकेसरवासिन्यै०नासिकां०महिषमर्दिन्यै०नेत्रे० लक्ष्म्यै०कर्णौ०भवान्यै०ललाटं०विंध्यवासिन्यै०शिरःपू०सिंहवाहिन्यै०सर्वांगंपू० ॥ ततोधूपादिकं०पुष्पांजल्यन्तेसाग्रानष्टचत्वारिंशत्परिमितान्दूर्वान्हस्तेनादाय ॥ बहुप्ररोहासततममृताहरितालता ॥ यथेयंललितेमातस्तथामेस्युर्मनोरथाः ॥ इतिमंत्रेणार्पयेत् ॥ पुनः एवमेवाष्टचत्वारिंशद्वारंसमर्पयेत् ॥ ततोदक्षिणानमस्कारः ॥ कथाश्रवणादिनारात्रौजागरणंकृत्वाप्रातःनित्यकर्मनिर्वर्त्यपुनःसंपूज्यदेव्यैअष्टौवटकान्समर्प्य अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानम् ॥ उपांगललितांगौरीमिमायेतिमंत्रेणअष्टोत्तरशतदूर्वाहुतिभिः नमोदेव्यैमहादेव्यैशिवायैसततंनमः । नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतामनेनमंत्रेणाष्टोत्तरशतातिलसर्पिःपंचखाद्ययुतपायसाहुतिभिर्यक्ष्ये ब्रह्मादिमंडलदेवताश्चैकैकयाहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्य अष्टौब्राह्मणान्वस्त्रादिभिःसंपूज्य तेभ्यःपक्वान्नपूरितान्दक्षिणासहितानष्टौकलशान्दद्यात् ॥ ततआचार्यंवस्त्रालंकारादिभिःसंपूज्यसदक्षिणंविंशतिवटकसहितंवायनंदद्यात् ॥ तत्रमंत्रः ॥ पक्वा

न्नफलसंयुक्तंसघृतंदक्षिणान्वितम् ॥ उपांगललिताप्रीत्यैब्राह्मणायददाम्यहम् ॥ ततोदेवींविसर्जयेत् ॥ मंत्रः ॥ सवाहनाशक्तियुता
वरदापूजितामया ॥ मातर्मामनुगृह्याथगम्यतांनिजमंदिरम् ॥ एवंविसृज्यसोपस्करंपीठंगांचआचार्यायदत्त्वाब्राह्मणान्सदन्नेनभोजयित्वा
आशिषोगृहीत्वास्वयंविंशतिवटकान्भुंजीत ॥ इतिस्कांदेललिताव्रतोद्यापनम् ॥ इतिश्रीमच्छांकर्यांपंचमीव्रतानि ॥ छ ॥ अथ
षष्ठीव्रतानि ॥ भाद्रशुक्लषष्ठ्यांललिताषष्ठीव्रतम् ॥ प्रातर्नारीनद्यांस्नात्वाशुक्लांबरासुवेषाभरणोपेतावंशपात्रेनद्याःपंचपिंडाकृति
वालुकांसंगृह्यगृहमागत्यपीठादौसंस्थाप्य तिथ्यादिसंकीर्त्यममअखंडितसौभाग्यप्राप्तिपूर्वकसौख्याभिवृद्धिद्वाराश्रीललिताषष्ठीप्री
त्यर्थंललिताषष्ठीव्रतंकरिष्ये ॥ ध्यानादिभिःपूजयेत् ॥ पंकजंकरवीरंनेपालींमालतींनीलोत्पलंकेतकींतगरंपुष्पसंख्याअष्टोत्तरशतम
ष्टाविंशतिर्वासंगृह्यसमर्प्य सोहालककरंजगुडवेष्टकर्णवेष्टमोदकादिभिः नैवेद्यंपुरतोन्यसेत् ॥ कूष्मांडनालिकेरत्रपुसदाडिमबी
जपूरतुंडीरकारवेंडादितत्कालसंभूतैःफलैःशोभांकृत्वाधान्यराशिस्थदीपावलिभिःसमंततोभूषयेत् ॥ एवंपूजांसमापयेत्प्रार्थयेच्च ॥
ललितेललितेदेविसौख्यसौभाग्यदायिनि ॥ अनंतंदेहिसौभाग्यंभगवत्यपरंवरम् ॥ ततोरात्रौगीतवाद्यादिभिर्निमेषोन्मेषरहितंसखीभिः
सहजागरणंकृत्वासप्तम्यांप्रातः तत्सर्वंनदींप्रतिनीत्वागंधपुष्पाक्षतादिभिरभ्यर्च्यतत्सर्वंनैवेद्यादिविप्रायदत्त्वागृहमागत्य अग्निंप्रतिष्ठा
प्य अष्टोत्तरशतदूर्वातिलघृतपंचखाद्ययुतपायसंचहुत्वा देवपितृमनुष्यान्सुवासिनीःकन्यकाश्चालंकारादिभिःपंचदशब्राह्मणांश्चवस्त्रा
दिभिःसंपूज्यगांचदत्त्वाबहुविधैर्भक्ष्यभोज्यैःसंतर्प्य ललितामेस्तुसंप्रीतेतिसंप्रार्थ्यस्वयंभुंजीतेति ॥ अथकपिलाषष्ठीव्रतम् ॥ हेमाद्रौ ॥ २२ ॥
भविष्ये ॥ भाद्रकृष्णषष्ठ्यांकपिलाषष्ठीव्रतम् । तच्चपूर्वापरयुतायांकार्यम् योगविशेषेण ॥ योगलक्षणंपुराणसमुच्चये “ भाद्रे

मास्यसितेपक्षेभानौचैवकरेस्थिते । पातेकुजेचरोहिण्यांसाषष्ठीकपिलास्मृता ॥ संयोगे चचतुर्णांचनिर्दिष्टापरमेष्ठिना ” इति । वराहपु
राणेऽपि “ नभस्येकृष्णपक्षेतुरोहिणीपातभूसुतैः । युक्ताषष्ठीपुराणज्ञैःकपिलापरिकीर्तिता ॥ व्रतोपवासनियमैर्भास्करंतत्रपूजयेत् ॥
कपिलांतुद्विजाग्र्यायदत्त्वाक्रतुफलंलभेत् ॥ ”एवंषष्ठीयदातदापंचम्यामेकभक्तंकृत्वाषष्ठ्यांप्रातर्दंतधावनंकृत्वाजलपूर्णांजलिंकृत्वा ॥
निराहारोऽद्यदेवेशत्वद्भक्तस्त्वत्परायणः ॥ पूजयिष्याम्यहंभक्त्याशरणंभवभास्कर ॥ इत्यर्घ्यंदत्त्वानद्यादौगत्वातत्रदारूशीरकुंकुमै
लामनःशिलापद्मकपत्रकयष्टिमधुगव्यानांपेषणंकृत्वाक्षीरेणालोड्यकल्केनस्नानंकार्यमनेनमंत्रेण ॥ आपस्त्वमसिदेवेशज्योतिषांपतिरे
वच ॥ पापंनाशयमेदेवमनोवाक्कायकर्मजम् ॥ ततःपंचगव्यस्नानं ततःपंचपल्लवैर्मार्जनं ततःशुद्धमृत्तिकांगृहीत्वास्नायादनेनमंत्रेण ॥
मृत्तिकेब्रह्मपूतासिकाश्यपेनाभिमंत्रिता ॥ पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धरइति । ततोवरुणंपूजयेत् ॥ पूजामंत्रः ॥ पाशाग्रहस्तव
रुणसर्ववारीश्वरप्रभो ॥ अद्याहंप्रार्थयामित्वांव्रतंकुरुसुरेश्वर ॥ ततःस्नात्वातिलकंधृत्वाभास्करंप्रणमेत् ॥ आदित्योभास्करोभानूर
विःसूर्योदिवाकरः ॥ प्रभाकरोमितोवीरोदेवःसर्वेश्वरोहरिः ॥ ततोगृहमागत्यतिथ्यादिसंकीर्त्यममअशेषपापक्षयपूर्वकरूपसंपदारो
ग्यविपुलसंततिस्वर्गलोकप्राप्तिद्वारासर्वावभासकसर्वतेजोमयश्रीसूर्यनारायणप्रीत्यर्थंकपिलाषष्ठीव्रतंकरिष्ये॥तदंगपुण्याहवाचनादिकृ
त्वाततोवृताचार्यः स्वयंवागोमयेनोपलिप्तायां भूमौकुंकुमेनाष्टदलपद्मंविधायतदुपरिसर्वतोभद्रेकलशोपरिरक्तवस्त्रेऽष्टपत्रंसकर्णिकंपद्मं
कृत्वातत्रपूर्वादिक्रमेणदेवताआवाहयेत् ॥ सूर्यं० भास्करं० सुवर्णरेतसं० रविम्० आदित्यं० दिवाकरं० प्रभाकरं० सूर्यं० तीव्ररश्मिधरं०
मध्येआधाररूपिणंवरुणंन्यसेत् ॥ तदुपरिसप्ताश्वभूषितंसौवर्णंरथंतत्राग्रतः सौवर्णमरुणंसारथिंकृत्वारक्तपुष्पैःसुगंधैश्चपूजयेत् ॥ मंत्रः ॥

विनतातनयोदेवःकर्मसाक्षिसुरेश्वरः ॥ सप्ताश्वःसप्तरज्जुश्चअरुणोमेप्रसीदतु । एवमरुणंसंपूज्यरथोपरिसौवर्णींसूर्यप्रतिमामाकृष्णेनेतिमं
त्रेणावाहयेत् । परितोदीप्तादिशक्तीन्न्यसेत् । ताश्चदीप्तासूक्ष्माभद्राविनीविमलाअनघाप्रमोघावैद्युतासर्वतोमुखी ॥ततोध्यात्वासनंपाद्यं
ततःकरवीरार्कपुष्परक्तचंदनचंपकपुष्पसुगंधकुंकुमकुसुमयुतंपात्रंहस्तेनादाय जानुभ्यामवनिंगत्वार्घ्यंनिवेदयेदनेन ॥ वेदगर्भनमस्तु
भ्यंवेदगर्भनमोस्तुते ॥ अव्यक्तमूर्तयेतुभ्यमर्घ्यंगृह्णनमोस्तुते ॥ ब्रह्ममूर्तिधरायैवचतुर्वक्त्रसनातन ॥ सृष्टिस्थितौसंस्थितायगृहाणा
र्घ्यंनमोऽस्तुते ॥ विष्णुरूपधरोदेवःपीतवस्त्रश्चतुर्भुजः ॥ प्रभवःसर्वलोकानामर्घ्यंगृह्णनमोस्तुते ॥ कालात्मासर्वभूतात्मावेदात्मासर्व
तोमुखः ॥ जन्ममृत्युजराशोकसंसारभयनाशनः ॥ दारिद्र्यव्यसनध्वंसीश्रीमान्देवोदिवाकरः ॥ हरिदश्वोंशुमालीचअर्घ्यंगृह्णनमोस्तु
ते ॥ चतुर्भिर्मूर्तिभिःसंस्थामष्टाभिःपरिगीयते ॥ सामध्वनिस्तुतोज्ञेयोअर्घ्यंगृह्णनमोस्तुते ॥ ततःपुष्पपूजांतेंऽगपूजा ॥ भास्कराय
नमःशिखांपूजयामि सूर्याय० ललाटं०भानवे०चक्षुषी० रवये०मुखं०भानुमते०कंठं० पद्मगर्भाय० हस्तौपू० तिमिरक्षयकृते०
स्तनौ० जातवेदसे०नाभिं०भानवे०कटी०उग्ररूपाय०गुह्यं० तेजोरूपाय०जंघे० स्थूलसूक्ष्मगुणरूपाय०पादौ० ॥ ततः पूजां
समर्प्यप्रार्थयेत् ॥ अग्निमीळेनमस्तुभ्यंनमस्तेजातवेदसे ॥ इषेत्वैवनमस्तुभ्यमग्नयेचनमोनमः ॥ आत्मरूपिन्नमस्तुभ्यंविश्व
मूर्तेनमोनमः ॥ त्वंब्रह्मात्वंचविष्णुश्चत्वंधातात्वंहुताशनः ॥ भुक्तिकाममभीप्सासिप्रार्थयामिसुरेश्वर ॥ इतिनमस्कारंकुर्यात् ।
ततःसंवर्चसेतिमंत्रेणपाणिभ्यांतोयेनमुखंसंमृज्यहंसःशुचिषदित्यृचासूर्यमालोक्यउदुत्यंचित्रंदेवानामितिसूक्तेदेवाग्रतोजपेत् ततोदूर्वा
फलपुष्पाक्षतनानाविधभक्ष्यैःफलकंकृत्वातत्रशुभदेशेशय्यांप्रकल्पयेत् ॥ ततोलवणाचलोपरिरौप्यमयंखड्गहस्तंवस्त्रयुगच्छन्नंसंस्था

प्यपूजयेत् ॥ मंत्रः ॥ नमस्तेक्रोधरूपायखड्गहस्ताजिघांसते ॥ जिघांसकामंत्वांदृष्ट्वाद्दुद्रुवुःसर्वेदेवताः । त्वयाव्याप्तंमेरुपृष्ठंचंडभास्क
रसुप्रभ ॥ अतस्त्वांपूजयिष्यामिअर्घ्यंगृह्णनमोऽस्तुते ॥ ततस्तांरात्रिमतिवाह्याभ्युदितेसूर्येपुनःस्नात्वादेवंसंपूज्याग्निंप्रतिष्ठाप्यान्वा
दध्यात् । प्रधानं श्रीसूर्यमर्कसमिद्भिःघृताक्ततिलैःसिद्धचरुणाघृतेनचप्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिःआकृष्णेनेतिमंत्रेणव्याहृ
तिभिर्वायक्ष्ये ॥ पीठवरुणदेवताःब्रह्मादिदेवताश्चआज्याहुत्या ततःस्विष्टकृतम् ॥ एवंहोमंसंपाद्य ततःपूर्वोपस्करसहितांकपिलांगामु
क्तप्रकारेणसंपूज्यप्रार्थयेत् ॥ कपिलेसर्वदेवानांपूजनीयासिरोहिणि ॥ सर्वतीर्थमयीयस्मादतःशांतिंप्रयच्छमे ॥ ततआचार्यपूजनं
कृत्वाततः तद्धस्तेगोभूहिरण्यवासोव्रीहिलवणतिलान्दत्वाकपिलांप्रार्थयेत् ॥ कपिलेपुण्यकर्मासिनिष्पाद्येपुण्यकर्मणि ॥ मांसमुद्धर
दीनंचददतोह्यक्षयंकुरु ॥ ब्रह्मणोत्पादितादेविअग्निकुंडात्ससुप्रभा ॥ नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते ॥ जयनित्यंमहासत्वेसर्व
तीर्थादिमंगले ॥ दातारंस्वजनोपेतंब्रह्मलोकंनयाशुवै ॥ ततःप्रदक्षिणांकृत्वाआचार्यहस्तेसोपस्करंसदक्षिणंपीठंगांचदद्यादनेनमंत्रेण॥
दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मादिवाकरः ॥ कपिलासहितोदेवोममसुक्तिंप्रयच्छतु ॥ तस्मात्त्वंकपिलेपुण्यासर्वलोकस्यपावनी ॥ प्रद
त्तासहसूर्येणममसुक्तिप्रदाभव ॥ ततःअन्यब्राह्मणान्संपूज्यअन्नादिनासंतर्प्यआशिषोगृहीत्वासुहृद्युतोभुंजीत ॥ सारोग्यरूपसौभाग्यः
सर्वदुःखविवर्जितः ॥ अंतेगोलोकंगच्छतीतिहेमाद्रौस्कांदेकपिलाषष्ठीव्रतम् ॥ अथसर्वासुषष्ठीषुस्कंदषष्ठीव्रतंहेमाद्रौभविष्ये ॥ यस्यां
कस्यांचित्षष्ठ्यांप्रातःस्नात्वा देशकालौसंकीर्त्य ममसत्कुलादिजन्मप्राप्तिपूर्वकैहिकविद्यालक्ष्मीसुखाद्यभिवृद्धिद्वाराश्रीस्कंदप्रीत्यर्थं
स्कंदषष्ठीव्रतंकरिष्ये ॥ ततःसुवर्णादिनामूर्तिंकृत्वापीठेसंस्थाप्यपूजयित्वादधिघृतपुष्पाक्षतायुतमर्घ्यंदद्यादनेनमंत्रेण ॥ सप्तर्षिदार

जस्कंदसेनाधिपमहाबल ॥ रुद्रोमाग्निजषड्वर्गमातृगर्भनमोस्तुते ॥ प्रीयतांदेवसेनानीःसंपादयतुहृद्गतम् । एवंपूजांकृत्वारात्रौ
भूमिंभाजनंकृत्वातैलपक्वविवर्जितंभोजनंकुर्यात् ॥ शक्तौसप्ताहमुपोषणंवाकृत्वा एवंशुक्लायांकृष्णायांचषष्ठ्यांकार्यं सर्वाभीष्ट
सिद्धिः ॥ इतिश्रीमच्छांकर्यांव्रतोद्यापनकौमुद्यांषष्ठीव्रतानि ॥ छ ॥ अथसप्तमीव्रतानि ॥ श्रावणशुक्लसप्तम्यांमध्याह्नव्या
पिन्यांशीतलाव्रतम् हेमाद्रौभविष्ये ॥ तद्विधिःमासपक्षाद्युल्लिख्य ममवैधव्यदारिद्र्यभर्तृवियोगनाशनपूर्वकपुत्रसौख्यधनधान्यप्रा
प्तयेशीतलाव्रतमहंकरिष्ये तदंगपूजनंकरिष्ये ॥ ततोधान्यराश्युपरिकलशेसुवर्णादिनिर्मितांशीतलाप्रतिमांनाममंत्रैःपूजयेत् ॥
ध्यानंस्कांदे ॥ वंदेहंशीतलांदेवींरासभस्थांदिगंबराम् ॥ मार्जनीकलशोपेतांशूर्पालंकृतमस्तकाम् ॥ इति । ततोऽर्घ्यंदद्यात् ॥
मंत्रः ॥ शीतलेदहमेपापंपुत्रसौख्यप्रदेनमः ॥ श्रावणस्यासितेपक्षेअर्घ्यंगृह्णनमोस्तुते ॥ इत्यर्घ्यम् ॥ दधिघृतमिश्रपक्वान्नंनैवे
द्यम् ॥ ततःसप्तसुवासिनीःपूजयित्वाकथांश्रुत्वाताभिःसहभुंजीत ॥ अथभाद्रपदशुक्लसप्तम्यांमुक्ताभरणव्रतंहेमाद्रौ ॥ सलिलाशये
स्नात्वागृहमागत्यगोमयादिलिप्तेशुद्धदेशेचमंडलंविधायतदुपरिचंदनादिनाउमासहितंशिवंलिखित्वोक्तप्रकारेणपूजयेत् ॥ देशकालौ
संकीर्त्यममसकलपापक्षयपूर्वकपुत्रपौत्रधनधान्यसौख्यातिशयप्राप्तिद्वाराश्रीसदाशिवप्रीत्यर्थंमुक्ताभरणसप्तमीव्रतंकरिष्ये ॥ इतिसं
कल्प्यपूर्वोक्तप्रकारेणपूजांसमाप्यप्रार्थयेत् ॥ महादेवमहाराजप्रीत्यापापप्रणाशन ॥ अस्माकंकुर्वतांपूजांसाधुवासाधुयोजिताम् ॥
ज्ञानतोज्ञानतोवापिभवतोविहिताचया ॥ संपूर्णयतुविश्वेशोविमलाकोमलस्तुताम् ॥ ततोदेवस्यपुरतः ॥ यावज्जीवंमयात्मातुशिव
स्यचनिवेदितः ॥ इत्येवंसमयंकृत्वासौवर्णंराजतंसौत्रंवादोरकंदेवाग्रतःसंपूज्यअनेनदोरकंगृह्णीयात् ॥ देवदेवजगन्नाथसर्वसौभाग्यदा

यक ॥ गृह्णीयांदोररूपंत्वांपुत्रपौत्रप्रवर्द्धनम् ॥ ततोहस्तेबंधनमंत्रः ॥ सप्तसामोपगीतंत्वांधारयामिजगद्गुरो ॥ सूत्रग्रंथिस्थितंनित्यं
धारयामिस्थिरोभव ॥ इत्यनेनमंत्रेणहस्तेबद्ध्वा ततः ॥ दहसर्वाणिपापानितुष्टिंकुरुदयानिधे ॥ प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव ॥
इतिजीर्णदोरकोत्तारणंकृत्वाब्राह्मणायएकादशशतसंख्याकान्मंडकान्घृतदक्षिणायुतान् वायनंदत्त्वातदेवद्रव्यंस्वयंभुंजीत ॥ एवंप्रति
मासंशुक्लसप्तम्यांकार्यम् ॥ वर्षांतेहैमींराजतींवामुद्रिकांताम्रपात्रोपरिसंस्थाप्यब्राह्मणेभ्योदद्यात् आचार्यायविशेषेणसौवर्णमंगुलीयकं
पुष्पकुंकुमतांबूलांजनसूत्रयुतंसदक्षिणंगांचदद्यात् ब्राह्मणान्भोजयित्वास्वयंभुंजीत ॥ संतानवृद्धिंलब्ध्वातुशिवलोकेमहीयते ॥ अथ
माघशुक्लसप्तम्यांरथसप्तमीव्रतंहेमाद्रौभविष्ये ॥ षष्ठ्यांप्रातःशुक्लतिलैर्नद्यादौस्नात्वादेवादीन्पूजयित्वासूर्यालयंगत्वासूर्यंनमस्कृत्य
गंधपुष्पाक्षतैःसंपूज्य स्वगृहमागत्यातिथींश्चसंभोज्यविद्यमानदिने तैलवर्जितंस्वयमश्नीयात् रात्रौविप्रंसमाहूयसंपूज्यानियमंकुर्यात् ॥
सप्तम्यांतुनिराहारोभूत्वाभोगविवर्जितः ॥ भोक्ष्येऽष्टम्यांजगन्नाथनिर्विघ्नंतत्रमेकुरु ॥ इत्युच्चार्यतोयंतोयेषुनिक्षिपेत् ततोविप्रंविसृज्यभू
मौस्वपेत् ॥ ततःसप्तम्यांप्रातररुणोदयवेलायां हरिद्रामलकचूर्णमृत्तिलैश्चसहस्नात्वाकृतावश्यकःसौरसूक्तंजप्त्वागोमयेनोपलिप्तायां
भूमौनदीतीरेगृहांगणेऽश्वत्थमूलेतुलसीमूलेवावस्त्रादिनामंडपंकृत्वातन्मध्येवेदिकातदुपरिधातुनाकुंकुमेनवाष्टदलंविधाय तदुपरिआर
क्तवस्त्रंप्रसार्यउपरिएकचक्रंहयान्वितंसोपस्करंसौवर्णंराजतंवारथंसंस्थाप्य तत्रसौवर्णींसूर्यप्रतिमामावाह्य ॥ ध्यानम् ॥ द्विभुजंशंखचक्रा
ढ्यंपद्मासनसमन्वितम् ॥ मुहूर्तसमयेसम्यग्ध्येयंनारायणंशुभम् ॥ रक्तगंधारक्तपुष्पगुग्गुलागरुधूपकाः ॥ परमान्नंनैवेद्यम् ॥ एवंषोड
शोपचारैःसंपूज्यतदग्रेधातुनारजनीचूर्णेनवाष्टदलंपद्मंविरच्यपूर्वादिक्रमेण रविम्० आदित्यं० सवितारं० मित्रं० खगपतिं० सूर्यम्० भास्क

रं० दिवाकरं० मित्रं० संपूज्यमध्येनारायणंपूजयित्वा ॥ भक्तिहीनंक्रियाहीनंमंत्रहीनंजगत्पते ॥ प्रसादात्तवसंपूर्णमर्चनंयदिहास्तुमे ॥
इतिसंप्रार्थ्य षण्मुहूर्तेरवौप्राप्तेसति तदायदिच्छयारविंसंप्रार्थ्यदक्षिणशिरस्कंधौतवस्त्रेणाच्छाद्यस्वपेत्॥ यावदुल्लंघ्यभास्करोगच्छेत्ताव
त्स्वप्नेसूर्यःमनोभिलषितंकथयेत् ॥ ततउत्थायप्रवालमुक्ताफलसहितंघृतेनलेपितं गर्भेहाटकपूर्णंदुकूलवेष्टितंसदक्षिणंसतांबूलंकूष्मां
डंदद्यात् तदभावेमातुलिंगंदेयम् ॥ अकिंचनेनससारथिरथंपंचवर्णकैर्निर्माय सौवर्णींप्रतिमांपूर्ववदर्चयेत् । ततोरात्रौजागरणंकृत्वा प्रात
स्तत्सर्वंगुरवेदत्त्वागांचदद्यात् ततइष्टजनैःसहभुंजीत ॥ एवमिहपुत्रपौत्रानुत्पाद्यसूर्यलोकंयास्यति ॥ अत्रैवस्नानम् । अरुणोदयेसप्ता
र्कपर्णानि बदरीपत्राणिचशिरसिनिधायस्नात्वाप्रार्थयेत् ॥ यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु ॥ तन्मेरोगंचशोकंचमाकरीहंतुसप्त
मी ॥ स्नानानंतरमर्घ्यं ॥ सप्तवाहशशिप्रीतसत्यलोकस्यदीपन ॥ सप्तम्यासहितोदेवगृहाणार्घ्यंदिवाकर ॥ इतिवाप्रार्थना ॥ जननीस
र्वभूतानांसप्तमीसप्तकेतिथिः ॥ सप्तव्याहृतिकेदेविनमस्तेसूर्यमंडले ॥ इतिभविष्योक्तस्नानादिविधिः ॥ माघशुक्लसप्तम्यामचलासप्त
मीव्रतम् ॥ तत्रमाघशुक्लषष्ठ्यांप्रातःस्नात्वादेशकालौसंकीर्त्यममाखिलपापक्षयपूर्वकरूपसौभाग्यसर्वकामफलप्राप्तिद्वाराश्रीसूर्यना
रायणप्रीत्यर्थमचलासप्तमीव्रतंकरिष्यइतिसंकल्प्यभास्करंसंपूज्यस्वयमेकभक्तंकुर्यात् ॥ ततःसप्तम्यामरुणोदयेसुगंभीरंजलाशयं
तडागंदेवखातंसरितंवाकेनचिन्नचालितंयावत्तावद्गत्वा प्रथमंसौवर्णेराजतेअलाबुमयेवापात्रेतैलवर्तियुतंकुसुमभूषितंदीपंसंस्थाप्यतत्पा
त्रंशिरसिधृत्वा हृदयेभास्करंध्यात्वा इमंमंत्रमुदीरयेत् ॥ नमस्तेरुद्ररूपायरसानांपतयेनमः ॥ वरुणायनमस्तेस्तुहरिवासनमोस्तु
ते ॥ इत्युक्त्वाजलेदीपंपरिहरेत् ततःस्नात्वादेवताःसंतर्प्य तत्तीरेचंदनेनाष्टदलंपद्मंविरच्य तत्रपूर्वादिक्रमेण रविं० भानुं० विव

स्वंतं० सवितारं० अर्कं० सहस्रकिरणं० सर्वात्मानं० मध्येउमायुतंशिवंप्रणवयुतंचसंस्थाप्यसंपूज्यविसृज्यस्वगृहमागत्यताम्रपात्रेऽथवामृन्मयेघृतगुडयुतंतिलपिष्टंसौवर्णमशक्तौ तिलपिष्टजंवाताालपत्रंरक्तवस्त्रेणाच्छाद्यसंपूज्यब्राह्मणद्वाराचालयेत् ॥ ततोब्राह्मणं संपूज्यतत्सर्वंनिवेदयेत् समग्रंदिनंहृदिभास्करंध्यायनूभुंजीत। रूपसौभाग्यव्रतीस्यात्॥अस्यामेवपुत्रसप्तमीव्रतमादित्यपुराणे॥षष्ठ्यां प्रातःस्नात्वातिथ्यादिसंकीर्त्य ॥ ममसद्गुणयुतपुत्रप्राप्तिपूर्वकपौत्राद्यभिवृद्धिद्वाराश्रीसूर्यनारायणप्रीत्यर्थंपुत्रसप्तमीव्रतंकरिष्ये ॥ इतिसंकल्प्य ततःसूर्यंश्वेतमाल्यांवरलेपनैःसंपूज्यउपोषणंकृत्वाभूमौस्वपेत् । ततःपुनरुत्थायस्नात्वापुनःसूर्यंपूजयित्वाऽग्निहोमंकुर्यात् । दध्योदनेनपयसापायसेनद्विजान्संतर्प्यभुंजीत । एवंपक्षद्वयेपि ॥ कृष्णेविशेषः । रक्तोत्पलरक्तपुष्पैःपूजनम् । एवंसंवत्सर पर्यंतंकृत्वापुत्रप्राप्तिर्भवेत् ॥ इतिश्रीमच्छंकरविरचितायांव्रतोद्यापनकौमुद्यांसप्तमीव्रतानि ॥ ७ ॥ अथाष्टमीव्रतानि ॥ बुधयुक्तायां शुक्लाष्टम्यांबुधाष्टमीव्रतम् ॥ तत्रसप्तम्यांसंकल्पपूर्वकंदंतधावनादिकृत्वादशविप्रान्निमंत्र्यअष्टम्यांप्रातर्गंगादितीर्थेस्नात्वादेशकालौ संकीर्त्य ममइहजन्मनिजन्मांतरेचबाल्याद्यारभ्यकर्मणामनसाजानताऽजानतावास्वर्णाद्यपहृतिदोषपरिहारपूर्वकपुत्रपौत्रादिसकलमनोरथप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंमयाआचरितबुधाष्टमीव्रतोद्यापनंकरिष्ये ॥ तदंगंपुण्याहवाचनादिकृत्वावृताचार्यः रंगवल्ल्यादिविराजि तदेशेसर्वतोभद्रमंडलेपीरपंचप्रस्थकलशेपूर्णपात्रोपरिपंचवर्णैरष्टदलंपद्मंकृत्वा तत्रउद्बुद्ध्यध्वमितिमंत्रेणस्वर्णनिर्मितबुधप्रतिमांमध्येसंस्थाप्य तद्दक्षिणेविष्णुमिदंविष्णुरितिमंत्रेण वामेसहस्रशीर्षेतिनारायणं० दलेषुपूर्वादिक्रमेण रविं० सोमं० भौमं० गुरुं० शुक्रं० शनिं० राहुं० केतुं० दलाग्रेषुपूर्वादिक्रमेण अनंतं० वामनं० विष्णुं० सौरं० सत्यं० जनार्दनं० हंसं० नारायणं० बाह्येइंद्रादींश्चसं

स्थाप्य दक्षिणे यमं० चित्रगुप्तं० श्यामलांचस्थापयेत् ॥ ततोःमंडलात्परितः अष्टाष्टलड्डुकयज्ञोपवीतदक्षिणायुतानष्टकलशान्संस्था
प्यउक्तरीत्यापीतवस्त्रपुष्पादिभिःपूजयेत् ॥ पुष्पपूजांतेंऽगपूजा ॥ बुधायनमःपादौपूजयामि सोमपुत्राय०जानुनी० तारकाय०
कटी० राजपुत्राय०उदरं० इलाप्रियाय० हृदयं० कुमाराय० वक्षःपू० पुरूरवसःपित्रे० बाहू० सोमसुताय० अंसौ० पीतवर्णा
य० मुखं० ज्ञानाय० नेत्रे० बुधाय० मूर्धानं० एवंसमाप्य तदुत्तरेउक्तरीत्याग्रहान्संस्थाप्यपूजयेत् ॥ केचित्पृथग्ग्रहकरणंनेच्छंति
तेषांमंडलांतःपातित्वात् ॥ ततोबुधायार्घ्यंसौवर्णादिपात्रेगंधपुष्पाक्षतयुतजलमादायजानुभ्यामवनींगत्वा ॥ उर्वश्याश्चगुरुर्यस्तु
यःपुरूरवसःपिता ॥ योग्रहाणामधिपतिर्बुधोनःसंप्रसीदतु ॥ रात्रौकथाश्रवणादिनाजागरंकृत्वा प्रातःपुनःसंपूज्य अग्निंप्रतिष्ठा
प्यान्वादध्यात् ॥ प्रधानं बुधमपामार्गसमिद्यववव्रीहितिलमिश्रगोधूमद्रव्यैःपृथक्पृथक् अष्टोत्तरशतसंख्याकाहुतिभिराधिप्रत्यधिदेवौ
चतैरेवद्रव्यैःपृथगष्टाविंशतिसंख्याकाहुतिभिः आवरणदेवताश्चैकैकयाआज्याहुत्याआदित्यादिग्रहान् तत्तद्द्रव्यैराष्टाष्टसंख्ययायक्ष्ये
मंडलदेवताश्चएकैकयाआज्याहुत्या ॥ एवंहोमंसंपाद्यस्विष्टकृदादिप्रायश्चित्तांतंहुत्वाबलिदानंपूर्णाहुतिंचसंपाद्यआचार्यादीन्संपूज्यदे
वतोद्वासनांतंकृत्वाआचार्यादयःयजमानमभिषिच्य ततोयजमानोविभूतिधारणंकृत्वा आचार्यायाष्टलड्डुकवायनम् ॥ संतुष्टोवाय
नादस्मादिलानाथोग्रहेश्वरः ॥ वरांश्चविष्णुनादत्तान्सकलान्नःप्रयच्छतु ॥ इतिमंत्रेणसोपस्करंपीठंगांचदत्त्वाअन्येभ्यःपूर्वस्थापितक
लशान्दत्त्वासदन्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत ॥ अथशुक्लादिश्रावणकृष्णाष्टम्यांदशाफलव्रतमादित्यपुराणे ॥ अष्टम्यांजन्म
समयेस्नात्वादेशकालसंकीर्तनांतेममदुःखशोकदारिद्र्यादिनाशपूर्वकसकलसुखसौभाग्यादिप्राप्तिद्वाराश्रीकृष्णप्रीत्यर्थंदशवर्षात्मकंद

शाहंदशाफलव्रतंकरिष्ये ॥ इतिसंकल्प्यपीठादौश्रीकृष्णंसंपूज्यदशतुलसीदलानिदशनामभिः कृष्णविष्णवनंतगोविंदगरुडध्वजदा
मोदरहृषीकेशपद्मनाभहरिप्रभुभ्यःसमर्पयेत् ॥ पूजनमंत्रः ॥ नारायणायदेवायगोकुलागारवासिने ॥ दिव्यायदिव्यरूपायबालकृ
ष्णायतेनमः ॥ तद्विष्णोरितिवा ॥ तदग्रेदशगुणंदशग्रंथियुतंसूत्रंन्यसेत् पुरतः दशपद्मानिपिष्टेनकृत्वापूजयित्वा तत्सूत्रंकंठेहस्ते
वा ॥ मंत्रः ॥ संसारार्णवमग्नानांनराणांपापकर्मणाम् ॥ इहामुत्रफलावाप्तिंकुरुष्वपुरुषोत्तम ॥ धृत्वादशाहंव्रतमाचरेत् दश
मेऽह्निपूजनंकृत्वाप्रस्थगोधूमचूर्णेनत्रिंशन्मोदकान्कृत्वादशदेवायदशब्राह्मणायदशआत्मने मोदकान् दशविधफलदक्षिणायुतदशमो
दकवायनम् ॥ त्रिलोकीनाथदेवेशसर्वभूतदयानिधे ॥ दानेनानेनदेवेशयथोक्तफलदोभव ॥ इतिदत्त्वाप्रार्थयेत् ॥ देवदेवजग
न्नाथवांछितार्थफलप्रद ॥ व्रतेनानेनसुप्रीतोरक्षत्वंभवसागरात् ॥ ततोभोजनंकुर्यात् ॥ एवंदशवर्षपर्यन्तंदशफलनामानि ॥
नारिकेलंचदाडिंबंनारिंगंकदलीफलम् ॥ पूगीफलंमातुलिंगंजंबीरंखर्जुरीफलम् ॥ कर्कोटकीबदामादिदशाफलमितिस्मृतम् ॥
उद्यापनम् ॥ पूर्वोक्तसंकल्पांतेवृताचार्यः सर्वतोभद्रस्थकलशोपरिहैमींश्रीकृष्णप्रतिमांसंस्थाप्यपूर्वोक्तप्रकारेणसुवर्णतुलसीदलेनचसं
पूज्यरात्रौजागरणंकुर्यात् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानं ॥ श्रीकृष्णमश्वत्थसमिच्चरुघृतद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया
मंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यपूर्वोक्तप्रकारेणवायनंदत्त्वासोपस्करंपीठंगांचदद्यात् । अन्यान्ब्राह्मणांश्चसंतर्प्य
आशिषोगृहीत्वाभुंजीत ॥ अथश्रावणकृष्णाष्टम्यांनिशीथव्यापिन्यांजन्माष्टमीव्रतम् ॥ प्रातर्दंतधावनपूर्वकंस्नात्वादेशकालौसंकी
र्त्य ॥ ममाऽखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा अमुककामनयावा आचरितजन्माष्टमीव्रतोद्यापनंकरिष्ये॥

तदंगपुण्याहवाचनादिकृत्वा वृताचार्योगोमयादिलिप्तशुद्धदेशेपंचवर्णवस्त्रपुष्पमालाफलादिशोभितेवेद्यांसर्वतोभद्रेप्रस्थतिलोपरिस्थ
कलशोपरिपूर्णपात्रेरौप्यमयेपर्यंकेसौवर्णीदेवकींतदुत्संगेवामनंस्तनपायिनं सौवर्णश्रीकृष्णमिदंविष्णुरितिविष्णोर्नुकमितिवामंत्रेणप
रितः वसुदेवं० बलदेवं० नंदं० यशोदां० सुभद्रां० रोहिणीं० विधुं० मत्स्यादिदशरूपाणि आदित्यादिग्रहान् अश्विन्यादिसप्तविंश
तिनक्षत्राणिदेवान्० नागान्० यक्षान्० विद्याधरान्० उरगान्० यमुनां० कालियं० कंसं० गाः० योगनिद्रां० सात्यकिम्० उद्धवम्० अ
क्रूरम्० उग्रसेनादियादवान्० शंखं० चक्रं० गदां० पद्मं०त्रुटिं० कालात्मानम्०अहोरात्रं० मासं० संवत्सरं० सर्वात्मानं०द्वारपालान्०
पुण्यशीलं० सुशीलम्० जयं० विजयं० पुरतोगरुडम् एवंनाममंत्रैरावाह्यपुरुषसूक्तेनपूजयेत् ॥ ध्यानम् ॥ कृष्णंचतुर्भुजंदेवंशंखच
क्रगदाधरम् ॥ पीतांबरयुगोपेतंलक्ष्मीयुक्तंविभूषितम् ॥ लसत्कौस्तुभशोभाढ्यंमेघश्यामंसुलोचनम् ॥ ध्यायामिपुंडरीकाक्षंजगदानं
दकारकम् ॥ अंगपूजा ॥ कृष्णाय० पादौ० संकर्षणाय० गुल्फौ० कालात्मने० जानुनी० विश्वकर्मणे० जंघे० विश्वनेत्राय० कटी०
पद्मनाभाय० नाभिं० परमात्मने० हृदयं० श्रीकंठाय० कंठं० सर्वास्त्रधारिणे० बाहू० वाचस्पतये० मुखं० केशवाय० ललाटं० स
र्वात्मने० शिरःपू० पूजांसमाप्यस्तोत्रंपठेत् ॥ अनघंवामनंशौरिंवैकुंठंपुरुषोत्तमम् ॥ वासुदेवंहृषीकेशंमाधवंमधुसूदनम् ॥ वाराहं
पुंडरीकाक्षंनृसिंहंदैत्यसूदनम् ॥ दामोदरंपद्मनाभंकेशवंगरुडध्वजम् ॥ गोविंदमच्युतंविष्णुमनन्तमपराजितम् ॥ अधोक्षजंजगद्बीजं
सृष्टिस्थित्यंतकारकम् ॥ अनादिनिधनंकृष्णंत्रैलोक्येशंजगद्गुरुम् ॥ नारायणंचतुर्बाहुंशंखचक्रगदाधरम् ॥ पीतांबरधरंनित्यंवनमा
लाविराजितम् ॥ श्रीवत्सांकंजगद्धेतुंश्रीधरंश्रीपतिंहरिम् ॥ इतिस्तोत्रंपठेत् ॥ देवस्यजातकर्मषष्ठीपूजादिकृत्वापुरतः अभयावचाशुं

ठीगुडूचीपिप्पलीशस्त्राणिनिक्षिप्याघ्र्यंदद्याच्चन्द्रोदये ॥ जातःकंसवधार्थायभूभारोत्तारणायच ॥ कौरवाणांविनाशायदैत्यानांनिधनाय
च ॥ पांडवानांहितार्थायधर्मसंस्थापनायच ॥ गृहाणाघ्र्यंमयादत्तंदेवकीसहितोहरे ॥ इतिकृष्णायाघ्र्यम्० अंगणेभूमौराजतंचंद्रबिंबं
संपूज्यतस्याघ्र्यंजानुभ्यामवनींकृत्वा ॥ क्षीरोदार्णवसंभूतलक्ष्मीबंधोनिशाकर ॥ गृहाणाघ्र्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ रोहि
ण्यैअघ्र्यं० दक्षस्यदुहितासाध्वीरोहिणीनामनामतः ॥ सोमेनसहितेदेविगृहाणाघ्र्यंनमोस्तुते ॥ ततःप्रार्थना ॥ त्राहिमांसर्वगश्रीशहरे
संसारसागरात् ॥ त्राहिमांसर्वपापघ्नदुःखशोकार्णवात्प्रभो ॥ यद्बाल्येयच्चकौमारेयौवनेयच्चवार्द्धके ॥ तत्पुण्यंवृद्धिमाप्नोतुपापंहरह
लायुध ॥ इति । रात्रौजागरणंकुर्यात् । प्रातःस्नात्वासंपूज्यअग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानंविष्णुमिदंविष्णुरितिमंत्रेणपायसतिल
व्रीहियवद्रव्यैःप्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिःपुनःपंचखाद्येनविष्णोर्नुकमितिमंत्रेणअष्टोत्तरशतसंख्ययापुनःपुरुषसूक्तेनप्रत्यृ
चमेकैकयाऽऽज्याहुत्यामहाव्याहृतिभिश्चअष्टाविंशतिसंख्याकाज्याहुतिभिःपरिवारदेवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्याशेषेणस्वि
ष्टकृतं ॥ ततआचार्यसंपूज्य विभवेसतिभूशय्यारौप्यवस्त्रकांचनादिदत्त्वापीठंचदद्यात् ॥ श्रीकृष्णःप्रतिगृह्णातिश्रीकृष्णोवैददातिच ॥
श्रीकृष्णस्तारकोभाभ्यांश्रीकृष्णायनमोनमः ॥ कृष्णायानंतरूपायदास्यामिप्रतिमामिमाम् ॥ द्रव्यंविष्णुसमुद्भूतमतःशांतिंप्रयच्छ
मे ॥ व्रतपूर्तयेगांचदद्यात् ॥ अभिषेकः । शतमर्धंविंशतिंदशवाब्राह्मणान्संतर्प्यस्वयंभुंजीतेतिभविष्योत्तरे ॥ अथज्येष्ठाव्रतंभाद्रपद
शुक्लाष्टम्यांज्येष्ठार्के ॥ इदंचज्येष्ठायोगवशेनपूर्वविद्धायांपरविद्धायांवाकार्यम् दिनद्वयेतद्योगेपरैव पूर्वेद्युरात्रौतद्योगेपूर्वैव । अन्यत्रविशे
षः । अष्टमीरविवारज्येष्ठर्क्षयोगेनीलज्येष्ठेत्युच्यत ॥ देशकालसंकीर्तनांतेममअलक्ष्मीपरिहारपूर्वकधनधान्यपुत्रपौत्रसौभाग्यादिवृद्धि

द्वाराश्रीज्येष्ठादेवताप्रीत्यर्थममुककामनासिद्ध्यर्थंवा ज्येष्ठाव्रतंतदुद्यापनंकरिष्ये ॥ पूर्वेद्युर्नद्याःशुद्धदेशजाःसिकताःसमानयितत्रदे वीस्वरूपंकृत्वापूजयेत् उद्यापनेतुसौवर्णींज्येष्ठाप्रतिमांमंडलेकलशोपरिसंस्थाप्यपूजयेत् ॥ त्रिलोचनांशुक्लदंतींबिभ्रतींराजतींतनुम् ॥ विरक्तांरक्तनयनांज्येष्ठामावाहयाम्यहम् ॥ इतिनाममंत्रेणपूजा ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि ॥ एह्येहित्वंमहामायेअर्घ्यं गृह्णनमोस्तुते ॥ इत्यर्घ्यं ॥ तामग्निवर्णामापोहिष्ठेतितिसृभिः हिरण्यवर्णेतिचतसृभिरभिषेकः ॥ प्रार्थना ॥ यस्याःसिंहोरथेयुक्तोव्याघ्र श्चापिमहाबलः ॥ ज्येष्ठामहामिमांदेवींप्रपद्येशरणंशुभाम् ॥ ततस्तर्पणम् ॥ ज्येष्ठान्तर्पयामि सत्यांत० कालिप्रियांत० विद्यांत० वैनाय कीं० तापिनीं० श्रीकृष्णांत० ॥ अपूपवायनंदत्त्वारात्रौजागरणंकृत्वाप्रातःपुनःसंपूज्यअग्निंप्रतिष्ठाप्य ॥ अत्रप्रधानं गौरींतामग्निवर्णा मितिमंत्रेण दधिमधुक्षीरघृतैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः मंडलदेवताश्च एवंहोमंकृत्वाआचार्यपूजनंसंपाद्यकृष्णवस्त्रयुतंपीठं व्रतपूर्तयेगांचदद्यात् ॥ सुवासिनीर्वस्त्रालंकारादिभिःसंपूज्यब्राह्मणांश्चसंतर्प्यआशिषोगृहीत्वाभुंजीत सिकतादिकंनद्यांत्यजेत् ॥ एवंद्वादशवर्षपर्यन्तंआजन्मपर्यन्तंवा ॥ भाद्रशुक्लाष्टम्यांदूर्वाष्टमीव्रतंभविष्ये ॥ प्रातःशुक्लतिलैःस्नात्वादेशकालौसंकीर्त्यममइहज न्मनिजन्मांतरेच अखंडसौभाग्यपुत्रपौत्रादिलक्ष्मीप्राप्त्यर्थंदूर्वाष्टमीव्रतंकरिष्ये ॥ उदीचींदिशंगत्वादूर्वामूलंनमस्कृत्यप्रार्थयेत् ॥ त्वं दूर्वेमृतजन्मासिवंदितासिसुरासुरैः ॥ सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव ॥ यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले॥ तथाविस्तृतसं तानंदेहित्वमजरामरे ॥ इति । तत्रैवगृहेवावितस्तिमात्रंदूर्वामानीयपीठेसंस्थाप्यतत्रतन्मूले शिवंगणेशंसंस्थाप्यतत्तन्मन्त्रेणपूजयेत् ॥ आगच्छदेविदूर्वेत्वंसर्वसंपत्प्रदायिनि ॥ यावद्व्रतंसमाप्येततावत्त्वंसंनिधौभव ॥ इत्यावाहनम् ॥ दध्यक्षतैःस्रग्भिश्चपूजनंखर्जुरीनारिकेल

मातुलुंगद्राक्षाबदरालिकुचजंबीरबीजपूरदाडिमीफलैर्नैवेद्यं तैरेववायनंविप्रायदत्त्वापूर्ववत्संप्रार्थ्यदेवींविसर्जयेत् ॥ मंत्रः ॥ विष्णुदेहस
मुद्भूतेदूर्वेत्वंहिप्रसीदमे ॥ वंदितासर्वदेवैस्तुगम्यतांनिजमंदिरम् ॥ ततस्सदन्नेनब्राह्मणान्संतर्प्यस्वयमग्निपक्वमन्नंदधिफलमक्षारलवण
मश्नीयात् ॥ एवंप्रतिमासमष्टम्याम् ॥ एवंसंवत्सरंकृत्वाअंतेउद्यापनंकुर्यात् ॥ वृताचार्योमंडलोपरिकलशस्थवैणवपात्रेसप्तधान्ययुक्ते
हैमींरौप्यमूलयुतांदूर्वांसंस्थाप्यपूर्वोक्तप्रकारेणपूजयित्वारात्रौजागरणंकुर्यात् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानं गौरींकांडा
त्कांडादितिमंत्रेणतिलैराज्येनचअष्टाधिकशतसंख्ययायक्ष्ये मंडलदेवताश्च ॥ एवंहोमंसंपाद्यब्राह्मणेभ्यःतिलपिष्टगोधूमसप्तधान्या
निफलानिचवायनत्वेनदत्त्वाआचार्यायवस्त्रादिभिःसंपूज्य सोपस्करंपीठंव्रतपूर्तयेगांचदत्त्वाद्वादशब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृ
हीत्वासंतानवृद्धिर्भवति ॥ अथभाद्रपदशुक्लाष्टमीमारभ्यषोडशदिनपर्यन्तंमहालक्ष्मीव्रतं तच्चार्धरात्रातिक्रमवर्तिन्यामष्टम्यांकार्यम् ॥
अत्रज्येष्ठायुतायांप्राशस्त्यम् ॥ अष्टम्यांप्रातःषोडशवारमंघ्रीकरौमुखंचप्रक्षाल्यषोडशगंडूषांश्चकृत्वामंत्रस्नानपुरःसरंस्नात्वातिथ्या
दिसंकीर्त्यममसकलदौर्भाग्यदुःखनिबर्हणपूर्वकधनधान्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीमहालक्ष्मीप्रीत्यर्थंमहालक्ष्मीव्रतंकरिष्ये ॥ त
तःषोडशतंतुमयंषोडशग्रंथियुतंसूत्रंनिर्मायविमलासनेसंस्थाप्य तत्र ॥ महालक्ष्मिसमागच्छपद्मनाभपदादिह ॥ पंचोपचारपूजेयंत्वद
र्थंपरिकल्पिता ॥ इति । लक्ष्मीमावाह्यषोडशदूर्वांकुरैः मालतीपुष्पकर्पूरचंदनादिभिः श्रीसूक्तेनलक्ष्मीसूक्तेनवासंपूज्यप्रार्थयेत् ॥ ध
नंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियम् ॥ तुरगान्दन्तिनःपुत्रान्महालक्ष्मिप्रयच्छमे ॥ विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांबरे ॥ लक्ष्मीदे
वियथासित्वंगृहेसूत्रेतथावस ॥ इति । अनेनपुरुषेणदक्षिणकरे स्त्रियाकंठे बद्धाकथांश्रुत्वाभुंजीत ॥ एवंकृष्णाष्टमीपर्यंतंप्रत्यहंतदेवसू

त्रंसंपूज्यधारयेत् ॥ कृष्णाष्टम्यांप्रातः वस्त्रगृहंरंगवल्ल्यादिभिर्युतंकृत्वातत्रअष्टदलमिंद्रादिशक्तियुतंनिर्मायतत्रकाष्ठमृच्चंदनादिभिश्च तुर्भुजांगजपृष्ठगतांमहालक्ष्मीमूर्तिंविरच्यतत्रपूर्ववन्नूतनंसूत्रंप्रतिष्ठाप्यपूजयेत् ॥ अथांगपूजा ॥ चपलायैनमःपादौपू० चंचलायै०जानुनी० कमलवासिन्यै०कटी० शांत्यै० नाभिं० मन्मथवासिन्यै० स्तनौ० ललितायै० भुजद्वयं० हृत्कंठिन्यै० कंठं० मायायै० मुखं० श्रियै० शिरःपू० क्षमायै० सर्वांगंपू० ॥ पूर्ववत्संपूज्यप्रार्थ्यतन्नूतनसूत्रंपूर्ववद्धृत्वाषोडशनमस्कारान्कृत्वाजीर्णंदोरकम् ॥ महालक्ष्मिगृहाणत्वंदोरकंयन्मयाधृतम् ॥ उत्तीर्यदोरकंबाह्वोर्लक्ष्मीपार्श्वेनिवेदयेत् ॥ ततोब्राह्मणान्संपूज्यशूर्पेषोडशदीपान्षोडशगोधूमलड्डुकांश्चनिधायदद्यात् ॥ चतुर्द्वादशसंख्याकान्दीपान्पिंडान्घृतप्लुतान् ॥ गृहाणत्वंद्विजश्रेष्ठवायनंप्रीतयेश्रियः ॥ ततश्चंद्रोदयेसतिचंद्रंसंपूज्यअर्घ्यंदद्यात् ॥ नमस्तेस्तुनिशानाथलक्ष्मीभ्रातर्नमोस्तुते ॥ व्रतंसंपूर्णतांयातुगृहाणार्घ्यंविधोमम ॥ ततोभोजनंकृत्वारात्रौजागरणंकुर्यात् प्रातःविसर्जयेत् अनेनमंत्रेण ॥ पंकजंदेविसंत्यज्यममवेश्मनिसंविश ॥ यथासपुत्रभृत्योहंसुखीस्यांत्वत्प्रसादतः ॥ तत्सूत्रंवर्षपर्यन्तंधारयेत् ॥ एवंषोडशवर्षपर्यंतमशक्तौषोडशदिनंवाचरित्वांतेउद्यापनंकुर्यात् ॥ पूर्वोक्तसंकल्पांतेवृताचार्यः सर्वतोभद्रस्थकलशेहैमीमहालक्ष्मीप्रतिमांसकुमिवेतिमंत्रेणसंस्थाप्यपूर्ववत्पूजयेत् ॥ चंद्रायार्घ्यंदत्त्वादेवीम्प्रार्थयेत् ॥ क्षीरोदार्णवसंभूतेकमलेकमलालये ॥ प्रयच्छसर्वकामान्मेविष्णुवक्षस्थलालये ॥ पुत्रान्देहिधनंदेहिसौख्यंसौभाग्यमेवच ॥ कुरुश्रियंमहालक्ष्मिअलक्ष्मींत्वाशुनाशय ॥ रात्रौजागरणंकुर्यात् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानं महालक्ष्मींश्रीसूक्तेनप्रत्यृचंकमलैःपुनर्घृताक्तपायसबिल्वघृतद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः लक्ष्मीमंत्रेणयक्ष्ये मंडलदेवताश्चाज्येन ॥ एवंहोमंकृत्वाआचार्यंसंपूज्यपीठंगांचदत्त्वा ततःषोडश

मिथुनानिवस्त्रादिभिःपूजयित्वाशूर्पैषोडशनानाविधभक्ष्याणि चंदनताडपत्रपूगीफलानिपर्णानिचनिक्षिप्यान्यशूर्पेणाच्छाद्यदद्यात् ॥ क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्रसहोदरा ॥ व्रतेनानेनसंतुष्टाप्रीयतांविष्णुवल्लभा ॥ एवंषोडश ॥ ततोब्राह्मणान्संतर्प्यआशिषोगृहीत्वाभुंजीत ॥ इति श्रीमच्छंकरविरचितायांव्रतोद्यापनकौमुद्यामष्टमीव्रतानि ॥ ७ ॥ अथनवमीव्रतानि ॥ तत्रचैत्रशुद्धनवम्यांरामनवमीव्रतंस्कांदे ॥ तच्चपरविद्धायांमध्याह्नव्यापिन्यांकार्यम् ॥ तिथ्यादिसंकीर्त्य० आत्मनःअखिलपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वारामआचरितस्यरामनवमीव्रतस्यसांगतासिद्ध्येतदुद्यापनंकरिष्ये ॥ ततःपूर्ववद्वृताचार्यःसर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषट्कोणंपद्मंविलिख्य तत्रमध्येहैमंरामंषडक्षरेण त्रयोदशाक्षरेणवामूलमंत्रेण ॥ मूलमंत्रस्तु ॥ रामरामरामेतिषडक्षरमंत्रः ॥ श्रीरामजयरामजयजयरामेतित्रयोदशाक्षरः ॥ वैदिकस्तु भद्रोभद्रयासचमानआगादिति ॥ तद्वामतोहैमींसीतांजनकात्मजायैनमइतिनाममंत्रेणचप्रतिष्ठाप्यपरितःषट्कोणेषुक्रमेण दशरथंकौसल्यांलक्ष्मणंभरतंशत्रुघ्नंमारुतिंचनाममंत्रैःप्रतिष्ठाप्यपुरुषसूक्तेनपूजयेत् ॥ पुष्पोत्तरमंगपूजा ॥ श्रीरामचंद्रायनमः पादौपूजयामि ॥ एवंसर्वत्र ॥ राजीवलोचनाय० गुल्फौ० रावणांतकाय० जानुनी० विश्वामित्रप्रियाय० नाभिं० परमात्मने० हृदयंपू० श्रीकंठाय० कंठं० सर्वास्त्रधारिणे० बाहू० विश्वमूर्तये० मुखं पद्मनाभाय० जिह्वां० दामोदराय० दंतान्० सीतापतये० ललाटं० ज्ञानगम्याय० शिरःपू० सर्वात्मने० सर्वांगंपू० ॥ नमस्कारमंत्रः ॥ नमोदेवाधिदेवायरघुनाथायशार्ङ्गिणे ॥ चिन्मयानंदरूपायसीतायाःपतयेनमः ॥ इति ॥ अर्घ्यमंत्रः ॥ दशाननवधार्थायधर्मसंस्थापनायच ॥ राक्षसानांविनाशायदैत्यानांनिधनायच ॥ परित्राणायसाधूनांजातोरामःस्वयंहरिः ॥ गृहाणार्घ्यंमयादत्तंभात्रादिसहितोऽनघ ॥ इति । ततः

पुराणपठनादिनारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम् राममाज्यपायसद्रव्येणप्रत्येकमष्टोत्तरसंख्याकाहुतिभिः मूलमंत्रेण जानक्यादिसप्तदेवताःउक्तद्रव्येणाऽष्टाविंशतिसंख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यआचार्यंसंपूज्यप्रतिमांदद्यात् ॥ तत्रमंत्रः ॥ इमांस्वर्णमयींरामप्रतिमांसमलंकृताम् ॥ श्रीरामप्रीतयेदास्येप्रीतोभवतुराघवः॥ इति ॥ ततोव्रतपूर्तयेगांचदत्त्वासदन्नेनब्राह्मणान्संतर्प्यदक्षिणादिभिःप्रतोष्यआशिषोगृहीत्वास्वयंभुंजीत ॥ इतिरामनवमीव्रतम् ॥ अथ रामनामलेखनोद्यापनविधिभविष्ये उमांप्रतिमहादेववचनम् ॥ “रामनामलिखेद्यस्तुलक्षकोटिशतावधि । एकैकमक्षरंपुंसांमहापातकनाशनम् ॥ प्राप्नोतिपरमांसिद्धिंदीर्घायुःपुत्रसंपदम् ॥” इति । तिथ्यादिसंकीर्त्यात्मनः अनेकपातकक्षयपूर्वकसकलमनोरथाऽवाप्तिद्वाराश्रीरामचंद्रप्रीत्यर्थंमयालिखितंयत्कोटिलक्षामुकावधिरामनामतत्संपूर्णतासिद्ध्येतदुद्यापनाख्यंकर्मकरिष्येइतिसंकल्प्यपूर्ववद्वृताचार्यःसर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषोडशमाषात्मकराजतसिंहासने सुवर्णस्यपलेनतदर्द्धेनवानिर्मितंरामंवामतःसीतांदक्षिणतोलक्ष्मणं पुरतोहनूमंतंचसौवर्णप्रतिमासुमूलमंत्रेणनाममंत्रेणच आवाह्यपुरुषसूक्तेनचपूजयेत् । परितःसप्तधान्योपरिवारिपूर्णानष्टौकलशान्पूर्वादिक्रमेणसंस्थाप्य तेषुलोकेशांस्तत्तन्मत्रैरावाह्यपूजयेत् । प्रातःअग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रलेखनदशांशेनशतांशेनवाहोमः ॥ अत्रप्रधानं राममाज्यद्रव्येणलेखनदशांशेनशतांशेनवामूलमंत्रेणपरिवारदेवताःब्रह्मादिदेवताश्चएकैकयाज्याहुत्याय ॥ ३० ॥
क्ष्ये ॥ एवंहोमंसंपाद्याचार्यंसंपूज्यपठिंदद्यात् ॥ तत्रमंत्रः ॥ सीतासौमित्रिहनुमद्युतंरामंसदक्षिणम् ॥ ददामिद्विजवर्यायरामोमेप्रीयतामिति ॥ ततोव्रतसंपूर्तयेगांचदत्त्वाघृतपूरितकांस्यपात्रंतिलपात्रंचयथाशक्तिदशदानानिदत्त्वायोगिराजंवटुकत्रयंचअन्यानपिसद्विजा

न्सदन्नेनसंतर्प्यदक्षिणादिनाप्रतोष्य आशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ अथभाद्रपदशुक्लनवम्यांमुहूर्तमात्रसत्त्वेपिपरयुतायामदुः
खनवमीव्रतंस्कांदे ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलदुःखनाशपूर्वकाभीष्टकामनासिद्धिद्वाराश्रीगौरीप्रीत्यर्थमदुःखनवमीव्रतंकरिष्ये॥
इतिसंकल्प्यगोमयेनोपलिप्य भूमौवेदींगुडेनलिप्तामिक्षुच्छादितामपूपपायसादियुतामुपरिमंडपिकायुतांकृत्वातत्रपीठेगौरींगौरीमिमा
येतिनमोदेव्याइतिवामंत्रेणसंपूज्यरात्रिंजागरणादिनानयेत्।तद्दिनेहिंसादिरहितमुपोषणंकार्यम् । अशक्तश्चेद्दुग्धफलादिभक्ष्यमत्यंताश
क्तश्चेद्धविष्यान्नम्॥प्रातःदेवींसंपूज्यसपत्नीकंब्राह्मणंसंपूज्यपंचफलान्वितंवायनंसोपस्करंदद्यात्तत्रमंत्रः ॥ गौर्यादुःखविनाशिन्याव्रतसंपू
र्तिहेतवे ॥ वायनंद्विजवर्यायसहिरण्यंददाम्यहम् ॥ इतिदत्त्वादेवींविसर्ज्यपीठंदत्त्वात्रिभ्योधिकान्द्विजान्संतर्प्यभुंजीत ॥ इति श्रीमच्छ
ङ्करविरचितायांव्रतोद्यापनकौमुद्यांनवमीव्रतानि ॥छ॥ अथदशमीव्रतानि॥तत्रशुभमासस्ययस्यांकस्यांचिच्छुक्लदशम्यांआशादशमी
व्रतं हेमाद्रौभविष्योत्तरे ॥ तिथ्यादिसंकीर्त्यात्मनः अखिलमनोरथावाप्तिपूर्वकदशाशास्वरूपिपरमेश्वरप्रीत्यर्थमाशादशमीव्रतंकरि
ष्ये ॥ इतिसंकल्प्य नक्तंगोमयेनोपलिप्तगृहांगणेयवैःपिष्टातकेनवास्त्रीरूपाःदशाशास्वरूपाःपुत्तलिकाःविलिख्यतत्रइंद्रादीनायुधवाह
नादियुतांस्तत्तन्मंत्रैःनाममंत्रैर्वासंपूज्यघृताक्तंनैवेद्यंभक्ष्यभोज्यादियुतंदीपांश्चपृथक्पृथग्दापयित्वाकालोद्भवानिफलानिचसमर्प्यप्रार्थ
येत् ॥ आशास्त्वाशाःसदासंतुसिध्यंतांमेमनोरथाः ॥ भवतीनांप्रसादेनसदाकल्याणमास्थिता ॥ ततोविप्रंसंपूज्यदक्षिणांदत्त्वाब्राह्मण
भोजनपुरःसरंस्वयंभुंजीत ॥ अनेनक्रमयोगेनमासिमासिसमाचरेत् ॥ वर्षांतेचकुरुश्रेष्ठउद्यापनविधिंचरेत् ॥ उद्यापनंकरिष्यइतिसंक
ल्प्यवृताचार्यःसर्वतोभद्रेब्रह्मादिदेवताआवाह्यतत्राक्षतपुंजेषुसौवर्णीःरौप्यावादशाशाप्रतिमाःसंस्थाप्य ॥ वक्ष्यमाणैर्दशभिर्मंत्रैःसंपूज

येत् ॥ त्वयिसन्निहितःशक्रःसुरासुरनमस्कृतः ॥ पूज्यात्वंभुवनस्यास्यऐंद्रीदिग्देवतेनमः ॥ अग्नेपरिग्रहावासेत्वमाग्नेयीतिपठ्यते ॥ तेजोरूपापराशक्तिराग्नेयीवरदाभव ॥ धर्मराजंसमाश्रित्यलोकान्संयमयत्यसौ ॥ तेनसंयमिनीचासिवरदात्वंसदाभव ॥ इति । खड्गहस्तासिविकृतानिर्ऋतिस्थानमाश्रिता ॥ तेननिर्ऋतिनामासित्वमाशांपूरयस्वमे ॥ त्वय्यास्तेभुवनाधारोवरुणोयादसांप तिः ॥ कर्मार्थममधर्मार्थंवारुणीप्रभवाभव ॥ अधिष्ठितासियस्मात्त्वंवायुनाजगदायुना ॥ वायव्येत्वमतःशांतिंनित्यंयच्छममा लये ॥ अधिष्ठिताकुबेरेणप्रख्यातात्वमिहोत्तरा ॥ निरुत्तराभवास्मासुदत्त्वासद्योमनोरथान् ॥ देवेनजगदीशेनशंभुनात्वमलं कृता ॥ पूरयस्वाशुमेदेविवांछितानिनमोनमः ॥ भुजंगाष्टकुलेनत्वंसेवितासियतोह्यधः ॥ नागांगनाभिःसहिताहिताभवममाव्ये ॥ सर्वलोकोपरिगतासर्वदात्वंशिवस्यच ॥ सनकाद्यैःपरिवृताद्यौस्त्वंमांपाहिसर्वदा ॥ नक्षत्राणिचसर्वाणिग्रहास्तारागणास्तथा ॥ नक्षत्रमातरोयाश्चभूतप्रेतविनायकाः ॥ सर्वेममेष्टसिद्ध्यर्थंभवंतुप्रवणाःसदा ॥ एभिर्मंत्रैःसंपूज्य ॥ ततोगीतवादित्रमंगलैःपति पुत्रवतीस्त्रीभिःजाग्रद्भिःसहपुराणपठनादिनाचनिशांनिनयेत् । प्रातःस्नात्वापूर्ववत्संपूज्यदशमिथुनानिवस्त्रादिनासंपूज्यअभावे एकंवासंपूज्य तेभ्यःसौभाग्यद्रव्ययुतंवायनंदक्षिणायुतंदत्त्वा आचार्यायपीठंव्रतसंपूर्तयेगांचदत्त्वाभक्ष्यभोज्यादिनाब्राह्मणान्सं तर्प्यदक्षिणादिनाप्रतोष्य सुहृन्मित्रादियुतोभुंजीत ॥ यएवंकुरुतेपार्थदशमीव्रतमादरात् ॥ सर्वान्कामानवाप्नोतिमनसोऽभी प्सितान्नरः ॥ इति आशादशमीव्रतम् ॥ अथभाद्रपदशुक्लदशम्यांदशावतारव्रतं भविष्ये ॥ तच्चदशवर्षात्मकम् ॥ दशम्यांप्रा तर्नद्यादौस्नात्वानित्यकर्मनिर्वर्त्यगृहमागत्यसंकल्पंकुर्यात् ॥ तिथ्यादिसंकीर्त्यदशावरान्दशपरान्पुरुषानात्मानंचोद्धर्तुकामस्तथा

श्वेतद्वीपवासपूर्वकनिरतिशयानंदसुखावाप्तयेचदशावतारस्वरूपिपरमेश्वरप्रीत्यर्थंदशावतारव्रतंकरिष्ये ॥ इतिसंकल्प्य । उक्तविधिना पुण्याहवाचनादिकृत्वा नदीतीरेगृहेवागोमयोपलिप्तशुद्धभूमौचंदनादिनामत्स्यादिदशावतारप्रतिमाविलिख्य विष्णुमंत्रेणप्रतिष्ठाप्य पुरुषसूक्तेनषोडशोपचारैःपूजयेत् । नैवेद्यादौविशेषः । गोधूमादिधान्यचूर्णस्यस्वहस्तप्रसृतित्रयंगृहीत्वातस्यात्रिंशत्पदार्थाघृतपाचिताः वक्ष्यमाणसंज्ञिताः कर्तव्याः। तत्रदशदेवायदशब्राह्मणायदशआत्मने वर्षेवर्षेभिन्ननामकाःप्रथमेपूरिकाः द्वितीयेअपूपाः तृतीये अपूपकासाराः चतुर्थेमोदकाः पंचमेसोहालिकाः षष्ठेखण्डवेष्टकाः सप्तमेकोकरसाः अष्टमेअर्कपुष्पनिभाः नवमेकर्णवेष्टकाः दशमे मंडकाः॥एवंसंपूज्यनमस्कुर्यात् ॥ मत्स्यंकूर्मंवराहंचनरसिंहंत्रिविक्रमम् ॥ रामंरामंचकृष्णंचबौद्धंचैवसकल्किनम्॥गतोऽस्मिशरणंदेवं हरिंनारायणंप्रभुम्॥प्रणतोस्मिजगन्नाथंसमेविष्णुःप्रसीदतु॥छिनत्तुवैष्णवींमायांभक्त्याप्रीतोजनार्दनः॥ श्वेतद्वीपंनयत्वस्मान्मयात्मासन्निवेदितः ॥ ततोब्राह्मणंसंपूज्यदक्षिणासहितमुक्तपदार्थंदशकंदत्वातावन्मितंस्वयंमौनीभुंजीत ॥ एवंदशवर्षंप्रतिभाद्रपदशुद्धदशम्यां कृत्वा अंतेउद्यापनंकुर्यात् ॥ तद्यथा पूर्वसंकल्पमुक्त्वाआचरितस्यदशावतारव्रतस्यउद्यापनंकरिष्ये ॥ इतिसंकल्प्य । शुचीन्मंत्रविदः दशद्विजान्वृत्वा अभावेएकंवृत्वा मधुपर्कादिनासंपूज्य ततः तेद्विजाः सर्वतोभद्रेउक्तविधिना ब्रह्मादिदेवतास्थापनपूर्वकंकलश प्रतिष्ठांतंकृत्वा तत्रहैमीर्दशप्रतिमाः मत्स्यादिदशावतारस्वरूपाः विष्णुमंत्रेणतत्तन्नाममंत्रेणवा आवाह्यपुरुषसूक्तेनषोडशोपचारैः संपूज्यपुराणस्तोत्रैःस्तुत्वाप्रणमेयुः । ततोयजमानः पूर्वनिमंत्रितान्द्विजान्वस्त्रादिनासम्पूज्य क्रमेण ताःप्रतिमास्तेभ्यो दक्षिणापुरःसरंदत्त्वा यथाशक्तिब्राह्मणान्संतर्प्याशिषोगृहीत्वास्वयंभुंजीत ॥ आश्विनशुक्लदशमीविजयादशमी ॥ साचतारकोदयव्यापिनीग्राह्या ॥

तत्रकृत्यं भविष्ये गोपथब्राह्मणेच । मंगलवाद्यघोषपुरःसरंसर्वैर्जनाः भूषणवस्त्रादिधारिणः सीमांतंगत्वा तत्रगणेशंदिक्पालांश्चसंपूज्य शमींसंपूजयेत् ॥ तत्रमंत्रः ॥ शमीशमयतेपापंशमीलोहितकंटका ॥ अमंगलानां शमनी शमनीदुष्कृतस्यच ॥ दुःस्वप्ननाशिनी धन्याशमींतांप्रणमाम्यहम् ॥ करिष्यमाणयात्रायांयथाकालंसुखंमम ॥ तत्रनिर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते ॥ राजादयस्तु आत्मनि वारामसाम्यतांध्यात्वारिपुप्रतिकृतिंकृत्वातांचशरेणच्छित्त्वाब्राह्मणेभ्योदक्षिणादिदत्त्वा शमीमूलगतामार्द्रांमृदंगृहीत्वा जयमंगलशब्दे नवरस्त्रीभिर्नीराज्यमानो रथवाजिगजपदातीनांप्रेक्ष्यकौतुकमाचरन् सोत्साहः स्वगृहंविशेत् ॥अथदशादित्यव्रतंपाद्मे॥ यदायस्मिन्क स्मिन्मासेशुक्लपक्षेरविवासरेदशमी तदा कर्तव्यम् । प्रातर्नद्यादौस्नात्वागृहमागत्यसंकल्पंकुर्यात् ॥ तद्यथा तिथ्यादिसंकीर्त्यममस मस्तपापक्षयपूर्वकपुत्रपौत्रसमुन्नतिधनधान्यगुणोत्कर्षप्राप्त्यर्थं तथाइहजन्मनिजन्मांतरेवा ज्ञानतोऽज्ञानतोवाकृततुषास्थिभस्ममुस लसंमार्जनीलंघनकुमारीरजकीरजस्वलावियोनिपशुयोनिब्राह्मणीगुरुयोषिद्गर्भिणीगमनसंध्याकालपर्वकालपुण्यसमयस्त्रीगमनपितृमा तृत्यागस्वामिधर्मपत्नीत्यागादिदुष्टकर्मजनितदुर्दशानिरसनार्थंशुभदशाप्राप्त्यर्थंदशादित्यव्रतंकरिष्ये ॥ इतिसंकल्प्य गणेशपूजनंपु ण्याहवाचनंचकृत्वापीठेनित्यवत् सूर्यमाकृष्णेतिमंत्रेणावाह्य ध्येयःसदासवितृमंडलेतित्रिमूर्तिरूपिणंध्यात्वा पुरुषसूक्तेनषोडशोप चारैःपूजयेत् । ततोदशदुर्दशादेवतापूजनम् ॥ शुद्धभूमौकृष्णवर्णचूर्णेनमष्यादिनावादशपुत्तलिकाःविलिख्यवक्ष्यमाणदशनामभिः क्रमेण आवाह्य तत्तन्नाममंत्रेणषोडशोपचारैःपूजयेत् । दुर्दशानामानि । दुर्मुखायै० दुर्मुखामावाह० इतिसर्वत्र दीनवदनायै० मा लिन्यै० सत्यनाशिन्यै० सुबुद्धिनाशिन्यै० हिंस्रायै० दुष्टायै० मित्रविरोधिन्यै० उच्चाटनकारिण्यै० बहुचिंताप्रदायै० दुर्दशायै०

एवंसंपूज्य अनेनमंत्रेणविसर्जयेत् ॥ नित्यंपापकरेपापेदेवद्विजविरोधिनि ॥ गच्छत्वंदुर्देशेदेविनीतिशास्त्रविरोधिनि ॥ ततस्तत्पूजा ॥
भूमौगोमयेनोपलेपयेत् स्वयंहस्तपादौप्रक्षाल्य आचम्यप्राणानायम्यतिथ्यादिसंकीर्त्यदशादित्यव्रतांगभूतंदशादित्यदोरकपूजनं
करिष्ये इतिसंकल्प्य शुचौदेशेपंचरंगशोभितमष्टदलंविरच्य तन्मध्येतंदुलराशिंकृत्वात दुपरिउक्तविधिनापूर्णपात्रयुतंतैजसंकलशं
प्रतिष्ठाप्यतत्रकुंकुमाष्टदलयुतंवस्त्रंप्रसार्यतत्रदशतंतुमितंदशग्रंथियुतंदोरकंसंस्थाप्य दशग्रंथिषुवक्ष्यमाणदशनामभिर्देवताऽऽवाहनंक्र
मेणकुर्यात् ॥ सूर्याय० सूर्यं० एवंसर्वत्र ॥ धात्रे० विधात्रे० अर्यम्णे० दिवाकराय० भास्कराय० भानवे० सुवर्णरेतसेन० तपनाय०
हंसतुरगाय० सवित्रे० आदित्याय० एतैरेवमंत्रैःषोडशोपचारैः पूजयेत् ॥ ततःपूजितंदोरकंपुरुषस्यदक्षिणेकरे स्त्रियाःवामेबद्धादशसु
दशाःपूजयेत् ॥ तत्रचंदनादिनाभित्तौपटेवादशपुत्तलिकाविलिख्यवक्ष्यमाणदशनाममंत्रेणआवाहयेत् ॥ सुबुद्धिदायिन्यै० सुखकारि
ण्यै० सर्वसंपत्तिदायिन्यै० इष्टभोगदायिन्यै० लक्ष्मीदायिन्यै० कीर्तिदायिन्यै० दुःखनाशिन्यै० पुत्रदायिन्यै० विजयायै० धर्म
दायिन्यै० इत्यावाह्य प्राणप्रतिष्ठांकृत्वा ततः ॥ विशुद्धदर्शनांदेवींवरदाभयदायिनीम् ॥ ध्यायेदशदशादेवींसर्वाभरणभूषिताम् ॥
इतिध्यात्वा एतैर्नाममंत्रैःषोडशोपचारैःपूजयेत् । ततःप्रार्थयेत् । विशुद्धवसनेदेविस्थानेचात्रस्थिराभव ॥ इष्टभोगप्रदानायसमग्रं
फलमाप्नुयाम् ॥ ततोवायनंदद्यात् ॥ तद्यथा दशफलान्वितंदशमोदकान्वितंवायनंशूर्पेनिधाय वस्त्रदक्षिणासहितंब्राह्मणपूजनपूर्वं
कंदद्यात् ॥ तत्रमंत्रः ॥ भास्करोबुद्धिदोदाताद्रव्यस्थोभास्करःस्वयम् ॥ भास्करस्तारकोभाभ्यांभास्करायनमोनमः ॥
तत्रअन्यानपिब्राह्मणान्भक्त्यावस्त्रादिनासंपूज्यव्रतपूर्तयेश्रोत्रियायकुटुंबिनेब्राह्मणायगांचदत्त्वासदन्नेनविप्रान्संतर्प्यआशिषोगृहीत्वादेवं

क्षमापयेत् ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंचयन्मया ॥ पूजितोसिसुरेशानपरिपूर्णंतदस्तुमे ॥ ततोदुर्दशानाशनंविश्वरूपिणं
भास्करंध्यात्वादोरकादिविसृज्य तैलादिवर्जितंदशमोदकान्वितंमौनेनभोजनंकुर्यात् ॥ इतिदशादित्यव्रतम् ॥ अथदशहराव्रतं
स्कांदे ॥ ज्येष्ठमासेसितेपक्षेदशम्यांबुधहस्तयोः ॥ गरानंदेव्यतीपातेकन्याचंद्रेवृषेरवौ ॥ दशयोगेनरःस्नात्वासर्वपापैःप्रमुच्यते ॥
इतिवराहपुराणे। दशम्यांशुक्लपक्षेतुज्येष्ठेमासेचजाह्नवी ॥ अवतीर्णायतःस्वर्गाद्धस्तर्क्षेचसरिद्वरा ॥ हरतेदशपापानितस्माद्दशहरास्मृ
ता ॥ स्नानदानादिकंतस्यामनंतफलदायकम् ॥ ॥ इति ॥ इति श्रीमच्चित्तपावनकुलाब्धिसंभवघारेइत्युपनामकवल्लाळसूरिसूनुशंकर
विरचितायांव्रतोद्यापनकौमुद्यांदशमीव्रतानिसमाप्तानि ॥ ॥ एकादशीव्रतोद्यापनविधिर्ग्रंथारम्भेउक्तः ॥ विशेषस्त्वत्रोच्यते ॥ अथ
ज्येष्ठशुक्लैकादश्यांनिर्जलैकादशीव्रतम् ॥ तद्विधिःस्कांदे । ज्येष्ठेमासिनृपश्रेष्ठयाशुक्लैकादशीभवेत् ॥ निर्जलंसमुपोष्यात्रजलकुंभान्स
शर्करान् ॥ प्रदायविप्रमुख्येभ्योमोदतेविष्णुसन्निधौ ॥ इति । तथाभारते भीमसेनंप्रतिव्यासवचनम् ॥ वृषस्थेमिथुनस्थेवाशुक्लाह्ये
कादशीभवेत् ॥ ज्येष्ठमासेप्रयत्नेनउपोष्याजलवर्जिता ॥ उदयादुदयंयावद्वर्जयित्वाजलंनरः ॥ अप्रयत्नादवाप्नोतिद्वादशद्वादशीर्नृ
प ॥ ततःप्रभातेविमलेद्वादश्यांस्नानमाचरेत् ॥ जलंसुवर्णंदत्त्वाचद्विजातिभ्योयथाविधि ॥ भुंजीतकृतकृत्यस्तुब्राह्मणैःसहितोवशी॥
संवत्सरस्ययामध्येएकादश्योभवंत्युत ॥ तासांफलमवाप्नोतिनात्रकार्याविचारणा ॥ इतिनिर्जलैकादशीव्रतम् ॥ आषाढशुक्लैकाद
श्यांशयन्येकादशीव्रतम् ॥ ब्रह्मपुराणे । एकादश्यांतुशुक्लायामाषाढेभगवान्हरिः ॥ भुजंगशयनेशेतेयदाक्षीरार्णवेसदा ॥ तदातं
तत्प्रतिमाकार्यासर्वलक्षणसंयुता ॥ कांचनीराजतीताम्रीचारुपैत्तलकीतथा ॥ पीतांबरधरासौम्यापर्यंकेस्वास्तृतेशुभे ॥ स्नापयि

त्वादांधिक्षीरघृतक्षौद्रजलैस्तथा ॥ उपचारैःषोडशकैःपूजयेत्परमेश्वरम् ॥ तत्रमंत्रः ॥ सुप्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदम् ॥ विबुद्धे त्वयिबुद्ध्येतजगत्सर्वंचराचरम् ॥ इति । रात्रौजागरणंकृत्वाप्रभातेदेवंसंपूज्यब्राह्मणान्सदन्नेनसंतर्प्यकिंचिन्नियमान्वितोमौनीभुंजीत । एवमेवप्रबोधिन्यांकार्यम् ॥ इत्याषाढशुक्लैकादश्यांशयन्येकादशीव्रतम् ॥ अथगोपद्मव्रतम् ॥ तच्चकार्तिकशुक्लैकादश्यांद्वादश्यां वाकार्यम् ॥ भविष्ये ॥ तिथ्यादिसंकीर्त्यआत्मनोयमदंडनिरसनपूर्वकपुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वाराश्रीगोपालप्रीत्यर्थंपंचवर्षा चरितगोपद्मव्रतोद्यापनंकरिष्ये ॥ वृताचार्यः सर्वतोभद्रस्थकलशेहैमंचतुर्भुजंगोपालंसम्पूज्य इदंविष्णुरितिमंत्रेणप्रार्थयेत् ॥ नमस्तेदेवदेवेशनमस्तेगरुडध्वज ॥ नमस्तेविष्णवेतुभ्यंव्रतस्यफलदायक ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ गोपालंस मित्तिलपायसाज्ययवद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाआज्याहुत्यायक्ष्ये ॥ ततःक्रमे णद्रव्याणांहोमेमंत्राः त्रीणिपदा० अतोदेवा० इदंविष्णु० विष्णोर्नुकं० तत्सवितुर्व० ॥ ततोवायनंप्रतिवर्षं क्रमेण सहैववात्रय स्त्रिंशत्संख्याकंदद्यात् ॥ प्रथमेपायसम् द्वितीयेमंडकान् तृतीयेमाषवटकान् चतुर्थेअपूपान् पंचमेलड्डुकान् ॥ वायनमंत्रः ॥ वा यनंतेद्विजश्रेष्ठददामिव्रतपूर्तये ॥ दक्षिणादिभिःसंयुक्तंगोपालःप्रीयतामिति ॥ ततःपंचमिथुनानिवस्त्रादिनासंपूज्य आचार्यायगांच दत्त्वा एवमेवलक्षगोपद्मव्रतम् ॥ हवनेविशेषः ॥ तद्दशांशेनशतांशेनवा पूर्वोक्तपंचद्रव्यैर्मिलित्वाकार्यम् वायनंच अन्यत्समानम् ॥ इतिगोपद्मव्रतम् ॥ अथभीष्मपंचकव्रतम् ॥ कार्तिकशुक्लैकादश्यांपंचदिनात्मकंपाद्मे ॥ तिथ्यादिसंकीर्त्यआत्मनोऽखिलपापक्षयपूर्व कधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं भीष्मपंचकव्रतंकरिष्ये ॥ इतिसंकल्प्य पश्चिमांसंध्यामुपास्यनदी

तीरेगृहेवाचतुर्द्वारोपशोभितमण्डपेगोमयोपलिप्तवेदिकायां सर्वतोभद्रेप्रस्थतिलोपरिपूर्णपात्रयुतकलशेवासुदेवम् ॐनमोभगवते
वासुदेवायेतिमंत्रेणसम्पूज्य अहोरात्रंदीपंपंचदिनंदत्त्वामौनीअष्टशतंद्वादशाक्षरंमंत्रंजप्त्वाऽग्निंप्रतिष्ठाप्य ॐविष्णवेनमः स्वाहेतिमंत्रे
णाष्टोत्तरशतंघृताक्ततिलव्रीहीन्हुत्वास्वयमंगुष्ठमात्रंगोमयंप्राश्यस्तोत्रपाठादिनारात्रिंनिनयेत् ॥ दिनपंचकेहोमादिकंसमानम् ॥
विशेषः ॥ प्रथमेऽह्निहरेःपादौकमलैःपूजयेत् स्वयंगोमयभक्षणम् ॥ द्वितीयेह्निबिल्वपत्रैर्जानुदेशंहरेःपूजयेत् त्रिपलंगोमूत्रंस्वयंप्राश्यम्
तृतीयेह्नि नाभिंशृंगारकेनपूजयेत् पलत्रयंपयःप्राशनम् चतुर्थेऽह्निबालबिल्वांकुरैःस्कंधौपूजयेत् पलत्रयंदधिप्राश्यम् पूर्णिमायां
मालत्याहरेःशिरःसम्पूज्यपलमात्रंसर्पिःप्राशयेत् मूलमंत्रेणपंचगव्यमंत्रैर्वापंचगव्यप्राशनम् अन्तेव्रतपूर्तयेकपिलांगांदत्त्वापीठं
चदत्त्वा ब्राह्मणान्संतर्प्यस्वयंभुंजीत ॥ अथप्रकारांतरेणभविष्योक्तम् ॥ पूर्वोक्तनियमान्वितः पूर्ववद्विष्णुंसम्पूज्य तद्दक्षिणत
स्तिलप्रस्थोपरिलौहींयमप्रतिमांसंपूज्यप्रार्थयेत् ॥ यदन्यजन्मनिकृतमिहजन्मनिवापुनः ॥ पापंमेप्रशमंयातुतवदेवप्रसादतः ॥
इति । पंचाहंपंचगव्याशीभीष्मायाऽर्घ्यंपंचस्वप्यहःसुदद्यादनेनमंत्रेण । वैयाघ्रपद्यगोत्रायसांकृतिप्रवरायच ॥ अपुत्रायददाम्येत
त्जलंभीष्मायवर्मणे ॥ अथमार्गकृष्णैकादश्यांवैतरणिव्रतं भविष्योत्तरे ॥ तिथ्यादिसंकीर्त्यआत्मनोयमलोकाऽदर्शनपूर्वक
विष्णुलोकप्राप्तिकामनयापरमेश्वरप्रीत्यर्थंवैतरणीव्रतंकरिष्ये ॥ वर्षात्मकंव्रतम् ॥ स्वयंनित्यकर्मनिर्वर्त्यरात्रौपूर्वाभिमुखींकृष्णां
सुरभिंसंस्थाप्य ॥ अग्रपादादारभ्यपश्चात्पादद्वयावधि गोपुच्छंसमासाद्यपितृतर्पणंकृत्वाशास्त्रविधिनासुरभिंपूजयेत् ॥ गोः अग्रपा
दाभ्यांनमः आस्याय० शृंगाभ्यां० स्कंधाय० पुच्छाय० पश्चिमपादाभ्यां० सर्वांगेभ्यो० इतिसंपूज्य ॥ मार्गशीर्षादिमा

सचतुष्टये ओदनं पुनश्चैत्रादिषु यावकाशनं पुनःश्रावणादिषुपायसम् ॥ तदन्नस्यत्रयोभागागोगुरोःस्वार्थमेवच ॥ एवंप्रतिमासंकृ
त्वावर्षांतेउद्यापनंकुर्यात् । सर्वोपस्करयुतसारदारुमयींशय्यां सौवर्णींसुरभिमागावइतिमंत्रेणसंपूज्य सपत्नीकंब्राह्मणंवस्त्रादिनासंपूज्य
तस्मैभारपरिमितलोहेनसहशय्यायुतांगांदद्यात् ॥ तत्रमंत्रः ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयता
मनयागवा ॥ ततोदक्षिणात्वेनहिरण्यंदत्त्वादीनानाथांश्चतर्पयेदिति ॥ इति वैतरणीव्रतम् ॥ अथद्वादशमासस्योभयैकादशीव्रतोद्यापनं
भविष्योत्तरे ॥ तिथ्यादिसंकीर्त्यात्मनः अखिलपापक्षयपूर्वकविष्णुलोकप्राप्त्यर्थमेकादशीव्रतोद्यापनंकरिष्ये ॥ कृतनित्यक्रियोमध्या
ह्नेसूर्यायार्घ्यंदत्त्वामंडलेकलशेहैमंकेशवंसंपूज्यरात्रौजागरणंकृत्वाप्रातःपंचगव्यंप्राश्यब्राह्मणान्संतर्प्यप्रतिमांदत्त्वास्वयंभुंजीत ॥ एव
मेवशुक्लैकादश्यांद्वादशमासेषुकेशवादिद्वादशनामानिक्रमेण तथाकृष्णैकादश्यांसंकर्षणादिद्वादशनामानि पूजायांजपादौज्ञेयानि॥का
र्तिकादिक्रमः मार्गशीर्षादिर्वा ॥ अंतेचतुर्विंशतिंद्वादशैकांवागांदत्त्वायथाशक्तिब्राह्मणान्भोजयेत् ॥ इत्युभयैकादशीव्रतम् ॥ इति
श्रीमद्व्रतोद्यापनकौमुद्यामेकादशीव्रतानि ॥ अथद्वादशीव्रतानि ॥ अथभाद्रपदशुक्लद्वादश्यांश्रवणद्वादशीव्रतं भविष्ये ॥ तच्चैकाद
शीयुतद्वादश्यां श्रवणयोगेकार्यम् बुधवारयोगेप्रशस्तम् ॥ प्रातर्नद्यादौ । वरोवरेण्योवरदोवराहोधरणीधरः ॥ अपवित्रंपवित्रंमांकरो
तुभगवान्हरिः ॥ इत्यनेनतिलान्विलिप्यस्नात्वानित्यकर्मनिर्वर्त्य संकल्पयेत् ॥ तिथ्यादिसंकीर्त्यात्मनः अखिलपापक्षयपूर्वकपिशा
चादिदुर्योनिनिरसनद्वाराश्रीविष्णुलोकप्राप्त्यर्थमाचरितश्रवणद्वादशीव्रतोद्यापनंकरिष्ये ॥ इतिसंकल्प्य व्रताचार्यः चतुर्द्वारोपशोभि
तमंडपांतर्वेदिकायांपीठदेवताःपूजयेत् ॥ आधारशक्त्यैनमः विमलायै० उत्कर्षिण्यै० ज्ञानशक्त्यै० क्रियाशक्त्यै० प्रह्व्यै० स

त्यायै० मायायै० मध्येपरमदेवतायै० परित इंद्रादिलोकपालेभ्यस्तदुपरितत्पूर्णपात्रयुतेकलशेगणपतिं० दुर्गां० क्षेत्रपालं० वा
स्तोष्पतिं० परितआदित्यादिनवग्रहदेवताभ्यःसंपूज्य तदुपरिसर्वतोभद्रंप्रसार्यतत्रब्रह्मादिदेवताःसंपूज्य तदुपरिकुशकृष्णाजिनंप्रसार्य
तत्रद्रोणपरिमिततिलपर्वतंकृत्वा तदलाभेगोधूमाः तत्रतिलपूरितपूर्णपात्रयुतकलशेद्वादशारयुतपद्मेहैमंवामनं त्रीणिपदेतिमंत्रेणसंपू
ज्यांगपूजांकुर्यात् ॥ मत्स्यायनमः पादौपूजयामि कूर्माय० जानुनीपू० वराहाय० गुह्यं० नृसिंहाय० नाभिं० वामनाय० उद
रं० परशुरामाय० दक्षिणभुजं० दाशरथिरामाय० वामभुजं० कृष्णाय० मुखं० बौद्धाय० कर्णौ० कल्किनेनमः शिरःपू० ॐनमो
भगवतेवासुदेवाय० सर्वांगंपू० ॥ दधिभक्तनैवेद्यंदत्त्वा प्रार्थयेत् ॥ नमस्तेऽदितिपुत्रायनमस्तेकश्यपात्मज ॥ त्रिविक्रमायदेवायवामनाय
नमोनमः ॥ ततोन्यग्रोधं कद्रुद्रायेतिमंत्रेणसंपूज्यशिक्यदध्यन्नेनयुतंजलपूरितंकरकंचसंपूजयेत् ॥ तत्रक्रमेणमंत्रौ ॥ शिक्योसिदधिभक्तोऽ
सिलंबितोसिमयोपरि ॥ सूत्रेणैवाश्रितोसित्वंवामनःप्रीयतामिति ॥ करकंपूजयिष्यामिसरितांसंगमेजलैः ॥ पंचरत्नसमायुक्तंतेनतुष्यतु
वामनः ॥ ततः सर्वान्प्रार्थयेत् ॥ पर्जन्योवरुणःसूर्यःकेशवःसलिलंशिवः ॥ त्वष्टायमोवैश्रवणःसदापापंहरंतुमे ॥ कथाश्रवणादिनारा
त्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम् वामनंपायसघृतसमित्तिलैःप्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः पीठ
देवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ होममंत्राश्च इरावतीतिमंत्रेणपायसंघृतंच इदंविष्णुरितिसमित् त्रीणिपदेत्याज्यम्
विष्णोःकर्माणिइतितिलाः ॥ ततोद्वादशसंख्याकान्विप्रान्वस्त्रादिनासंपूज्यदध्यन्नोपवीतगोपीचंदनयुतान्सुगन्धजलपूरितान्द्वादशकर ॥ ३९ ॥
कांस्तेभ्योदद्यात् ॥ तत्रमंत्रः ॥ सुगंधिजलसंपूर्णंदधिभक्तयुतंद्विज ॥ करकंतेप्रदास्यामिवामनःप्रीयतामिति ॥ ततः ॥ वामनःप्र

तिगृह्णातिवामनोवैददातिच ॥ वामनस्तारकोभाभ्यांवामनायनमोनमइत्यनेनसोपरस्करंपीठमाचार्यायदद्यात् ॥ व्रतपूर्तयेगांचदत्त्वा विप्रान्भोजयेत् ॥ इतिश्रवणद्वादशीव्रतम् ॥ अथपौषकृष्णद्वादश्यांसुरूपाद्वादशीव्रतं भविष्ये ॥ अथवा पौषेपुष्यर्क्षेयदातदावा कार्यम् ॥ तिथ्यादिसंकीर्त्य आत्मनोदौर्भाग्यदौर्वर्ण्यादिशमनपूर्वकातुलसौभाग्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसुरूपाद्वा दशीव्रतंकरिष्ये ॥ वृताचार्यः सर्वतोभद्रस्थतिलोपरिस्थकलशेहैमंलक्ष्मीयुतंविष्णुं सहस्रशीर्षेतिसंपूज्य परितः शंखंचक्रंगदांपद्मंचसं पूज्यविष्णवेर्घ्यंदद्यात् ॥ नमःपरमशांतायविरूपाक्षनमोस्तुते ॥ सर्वसंकष्टनाशायगृहाणार्घ्यंनमोस्तुते ॥ ततस्तिलमिश्रितपक्वान्ननै वेद्यंदत्त्वास्वयमुपोष्यरात्रौजागरेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम् विष्णुंगोमयतिलद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसं ख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ श्वेतायाएकवर्णायावागोः अंतरिक्षधृतंगोमयंग्राह्यमंगुष्ठार्धमाहुतिप्रमाणम् ॥ हवनमंत्राः ॥ सहस्रशीर्षेतिगोमयं व्याहृतिभिस्तिलान् होमांते वैष्णवंश्राद्धंकृत्वापीठंगांचदत्त्वाब्राह्मणान्भोजयेदिति ॥ अथवारा त्रौहोमादिकंकृत्वाप्रातः स्वयंपारणंकुर्यात् ॥ इतिसुरूपाद्वादशीव्रतम् ॥ अथविष्णुपंचकव्रतम् विष्णुधर्मोत्तरे ॥ तत्रग्रहणविधिः ॥ अथभाद्रशुक्लद्वादश्यां यदाश्रवणर्क्षंतदारभ्यवर्षपर्यंतंकार्यम् मासेपंचोपोषणानि । श्रवणेएकादशीद्वयेअमायांपूर्णिमायांविष्णुंसंपू ज्यउपवसेत् । एवंसंवत्सरंकुर्यात् अंतेद्वादश्यामुद्यापनंकुर्यात् ॥ तद्यथा तिथ्यादिसंकीर्त्यात्मनः पंचमहापातकसकलपातकोपपात कक्षयपूर्वकविष्णुलोकप्राप्तिद्वाराश्रीविष्णुप्रीत्यर्थमाचरितस्यवर्षपर्यंतंविष्णुपंचकव्रतस्यपूर्णतासिद्ध्यर्थंतदुद्यापनंकरिष्ये ॥ वृताचार्यः सर्वतोभद्रेपंचकलशान्प्रतिष्ठाप्यतदुपरिसौवर्णीं विष्णुप्रतिमांमंत्रपंचकेनप्रतिष्ठापयेत् ॥ क्रमेणमंत्राः त्रीणिपदा० श्रवणर्क्षकलशे

तद्विष्णोरिति शुक्लैकादशीकलशे तद्विप्रासोविपन्यवइतिपूर्णिमाकलशे अतोदेवाइतिकृष्णैकादशीकलशे इदंविष्णुरित्यमाकलशे ततः क्रमेणकलशपंचकेद्वादशतत्तद्देवता आवाहयेत् परितःगोवर्द्धनधरम् अनंतं० पुंडरीकाक्षं० नित्यं० वेदगर्भं० यक्षं० पुरुषं०सुब्रह्मण्यं० जयं० शौरिं० वैकुंठं० गरुडध्वजं० श्रवणस्य केशवं० नारायणं० माधवं० गोविंदं० विष्णुं० मधुसूदनं० त्रिविक्रमं० वामनं० श्रीधरं० हृषीकेशं० पद्मनाभं० दामोदरं० संकर्षणं० शुक्लैकादश्याः विधुं० शशिनं० शशांकं० चंद्रं० सोमं० उडुपं० मनोरमं० अमृतं० पावनं० हिमकृतं० निशाकरं० आप्यायनं० पूर्णिमायाः संकर्षणं० वासुदेवं० प्रद्युम्नं० अनिरुद्धं० पुरुषोत्तमं० अधोक्षजं०नारसिंहं० अच्युतं० जनार्दनं० उपेंद्रं० हरिं० कृष्णं० कृष्णैकादश्याः महीधरं० जगन्नाथं० देवेंद्रं०देवकीसुतं० चतुर्भुजं० गदापाणिं० सुरेशं० सुलोचनं० चार्वंगं० चक्रपाणिं० सुमित्रं० असुरांतकं० अमायाः एवंषोडशोपचारैःपूर्वोक्तपंचमंत्रैःसम्पूज्यषष्टिनामभिः षष्टिनमस्कारान्कृत्वा रात्रिंनिनयेत् । प्रातः अग्निंप्रतिष्ठाप्यअन्वादध्यात् । विष्णुं घृताक्तापूपपायसघृतपंचामृततिलद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः श्रवणदेवताः घृताक्ताऽपूपैः शुक्लैकादशीदेवताःगुडपायसेन पूर्णिमादेवताःघृतपायसाभ्यां कृष्णैकादशीदेवताःपंचामृततिलौदनैः अमादेवताश्चतिलमुद्गगुडौदनैः प्रत्येकमेकैकयाज्याहुत्याब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततआचार्यसंपूज्यपीठंव्रतपूर्तयेगांचदत्त्वाविभवेसतिसस्यवतींभूमिंचदत्त्वा अन्यपंचब्राह्मणेभ्योगोमेदंपुष्परागंवैदूर्यंनीलंमाणिक्यंचेतिपंचरत्नानिदक्षिणापुरःसरंसहिरत्नानीतिमंत्रेणदत्त्वाषष्टिब्राह्मणान्परमान्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत ॥ एवंकृतेपंचमहापातकादिभ्योमुक्तोभवति॥इतिविष्णुपंचकव्रतम् ॥ इतिश्रीमच्चित्तपावनकुलोद्भूतघारेइत्युपनामकशंकरविरचितायां व्रतोद्यापनकौमुद्यांद्वादशीव्रतानि ॥ 

॥ अथत्रयोदशीव्रतानि ॥ आषाढशुक्लत्रयोदश्यांजयापार्वतीव्रतं भविष्ये ॥ विंशतिवर्षात्मकंषड्दिनात्मकंत्रयोदशीमारभ्य तृतीयापर्यन्तंप्रत्यहंदेवंपूजयेत् ॥ तिथ्यादिसंकीर्त्यआत्मनोवैधव्यनाशाऽखंडसौभाग्यपुत्रपौत्रादिप्राप्तिद्वाराश्रीउमामहेश्वरप्रीत्यर्थं जयापार्वतीव्रतंकरिष्ये ॥ मंडलेउक्तप्रकारेणकलशोपरिहैमसिंहोपरिसुवर्णराजतनिर्मितौउमामहेश्वरौ गौरीर्मिमायेतितत्पुरुषा येतिमंत्राभ्यांसंपूजयेत् ॥ सुवासिनीसंपूज्यस्वयंनक्तंकुर्यात् ॥ स्वभक्षणनियमस्तु पंचाब्दंयावनालैः पंचाब्दंलवणव र्जितयवैः पंचाब्दमिक्षुरसवर्जिततंडुलैः पंचाब्दंमुद्गैः यूथिकादंतकाष्ठं व्रतांतेपायसतिलाभ्यामष्टोत्तरसहस्रंहुत्वाविंशतिमिथुना निवस्त्रादिनासंपूज्य पक्वान्नसौभाग्यद्रव्ययुतवायनंसदक्षिणाकंदत्त्वा व्रतपूर्तयेआचार्यायगांचदत्त्वासर्वरसयुतंस्वयंभुंजीत ॥ इ तिजयापार्वतीव्रतम् ॥ अथभाद्रपदशुक्लत्रयोदश्यांगोत्रिरात्रव्रतं भविष्ये ॥ वर्षत्रयात्मकम् ॥ तिथ्यादिसंकीर्त्यसत्पुत्रप्राप्तिपूर्व कसुखसौभाग्याद्यभिवृद्धिद्वाराश्रीलक्ष्मीनारायणप्रीत्यर्थंगोत्रिरात्रव्रतंकरिष्ये ॥ मंडलेउक्तप्रकारेणसौवर्णीलक्ष्मीनारायणप्रतिमांपं चामृतपुरःसरंसंपूज्यगांच आगावइतिमंत्रेणसंपूज्य अहोरात्रंदिनत्रयंघृतदीपंदद्यात् ॥ दिनत्रयमर्घ्यदानेविशेषः । क्रमेण बीजपूरं० दाडिमं० नारिकेलं० प्रत्यहंहविष्यान्नपूरितंकरकंदंपतिभ्यांदद्यात् ॥ पायसोपहारः । स्वयंदिनत्रयमुपोषणंकार्यम् । चतुर्थेऽह्निपीठं धेनुत्रयमेकांगांतन्मौल्यंवाचार्यायदत्त्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत ॥ एवंचरित्वा अंतेउक्तविधिना वृताचार्यः मंडलेदेवंसंपू ज्यहोमंकुर्यात् । तद्यथा अग्निंप्रतिष्ठाप्य अन्वादध्यात् । लक्ष्मीनारायणमष्टोत्तरशत संख्याकाहुतिभिः पायसद्रव्येण इदंविष्णुरितिमं त्रेणसुरभिंगांच आगावइतिमंत्रेणपायसद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिर्यक्ष्ये ॥ ततोवेणुपात्रस्थनालिकेरद्राक्षाखर्जूरदाडिमबीजपू

रसौभाग्यद्रव्ययुतंवायनंपूजनदक्षिणापुरःसरंदंपतिभ्योदद्यात् ॥ सवत्सांगांसालंकारामाचार्यायदत्त्वापीठंचयथाशक्तिब्राह्मणान्संतर्प्य स्वयंभुंजीत ॥ इतिगोत्रिरात्रव्रतम् ॥ अथाशोकत्रिरात्रिव्रतम् ॥ यस्मिन्कस्मिन्मासेत्रयोदश्यांशुभतिथौकार्यम् ॥ तिथ्यादिसंकीर्त्य आत्मनःशोकदुःखादिनाशपूर्वकाभीष्टफलप्राप्तिद्वाराश्रीसीतारामचंद्रप्रीत्यर्थमशोकत्रिरात्रिव्रतंकरिष्यइतिसंकल्प्य मंडलेराजताऽशोकवृक्षेसौवर्णीः शिवसीतारामलक्ष्मणप्रतिमास्तत्तन्मंत्रैःसंपूज्यअर्घ्यंदद्यात् । तत्रमंत्रः ॥ अशोकवाटिकामध्येसीतयात्वंप्रसादितः ॥ अशोकसंपन्नफलोगृहाणार्घ्यंकृतंमया ॥ १ ॥ इत्यशोकस्य ॥ गौर्यालक्ष्म्यातथेन्द्राण्याअरुंधत्यामहेश्वर ॥ त्वंसमाराधितःपूर्वमशोकफलदोभव ॥ २ ॥ इतिशिवस्य ॥ रावणस्यवधार्थायउत्पन्नस्त्वंमहीतले ॥ विष्णोरंशोऽसिदेवेशगृहाणार्घ्यंनमोस्तुते ॥ ३ ॥ रामस्य ॥ तातभक्त्युन्मुखंचीरंधृत्वायोनवयौवनम् ॥ सौमित्रेयमहाभागगृहाणार्घ्यंनमोस्तुते ॥ ४ ॥ लक्ष्मणस्य ॥ अवनीतलसंभूतेसीतेसर्वांगसुंदरि ॥ गृहाणार्घ्यंमयादत्तंपूज्येजनकनंदिनि ॥ ५ ॥ सीतायाः ॥ ततःप्रार्थयेत् ॥ अशोकशोकहर्तात्वंशोकंनाशयमेप्रभो ॥ मातृपितृपतीनांचश्वशुराणांतथैवच ॥ अशोकस्त्वंशोकहरोभवसर्वत्रनःकुले ॥ एवंत्रिरात्रंचरित्वांतेव्रतपूर्त्येगांचदद्यात् ॥ इत्यशोकत्रिरात्रिव्रतम् ॥ अथकार्तिकादिमासेषुत्रयोदश्यांप्रदोषव्रतम् ॥ वर्षात्मकं यावज्जीवंवा शनियोगेमहाफलम् भौमयोगेऋणमोचनम् ॥ तिथ्यादिसंकीर्त्यात्मनः अखिलपापक्षयशत्रुपराजयपूर्वकायुरारोग्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीमदुमामहेश्वरप्रीत्यर्थमाचरितप्रदोषव्रतोद्यापनंकरिष्ये ॥ वृताचार्यः उक्तप्रकारेणलिंगतोभद्रस्थताम्रकलशेरौप्यपूर्णपात्रयुतेसौवर्णसांबसदाशिवं पुरतोराजतंवृषभं तत्तन्मंत्रैःप्रतिष्ठाप्य परितः असितांगभैरवाय० १ रुरुभैरवाय० २ चंडभैरवाय० ३ क्रोध

भैरवाय० ४ उन्मत्तभैरवा० ५ भीषणभैरवाय० ६ संहारभैरवाय० ७ कपालभैरवाय० ८ कालभैरवाय० ९ इतिप्रतिष्ठाप्यपूजयेत् ॥ मूलमंत्रेणन्यासंकृत्वा सद्योजातादि० ५ पंचब्रह्ममंत्रैःपूजयेत् ॥ प्रकारांतरेणपूजनम् ॥ विष्णुं० ब्रह्माणं० भास्करं० सोमं० पूर्वादिक्रमतः प्रथमावरणे जयं० १ विजयं० २ गणपतिं० ३ दुर्गां० ४ द्वितीये नंदीश्वरं० १ क्षेत्रपालं० २ वास्तोष्पतिं ३ वायुं० ४ तृतीये सप्तर्षीन् चतुर्थे भूतनाथंपंचमे इंद्रादीन्षष्ठे कपालिनं०सप्तमे गंधर्वानअष्टमे ॥ सद्योजातेत्यासनं वामदेवायेतिपाद्यं० अघोरायेत्यर्घ्यम्० तत्पुरुषायेत्याचमनीयं० ईशानायेतिस्नानं० त्र्यंबकमितिवस्त्रंयज्ञोपवीतमुत्तरीयंच नमःसोमायेतिगंधं नमःशंभवेइत्यक्षतान् इमारुद्रायेतिपुष्पाणि एवापित्रेतिबिल्वदलानि मानस्तोकेतिधूपं० आतेपितरितिदीपं त्वादत्तेतिनैवेद्यम् ॥ कद्रुद्रायेतिताम्बूलम् इमारुद्रायस्थिरधन्वनेइतिदाक्षिणाम् सहिक्षयेणक्षम्येतिमंत्रपुष्पम् यातेदिद्युदेतिनमस्कारम् पुनर्नाममंत्रेणाऽष्टौ प्रदक्षिणानमस्कारांश्चकुर्यात् भवाय० १ महादेवाय० २ रुद्राय ० ३ नीलकंठाय ० ४ शशिमौलिने० ५ उग्राय० ६ भीमाय० ७ ईशानाय० ८ ततोर्घ्यं रजतादिपात्रेक्षीरकुशघृतदधितण्डुलसिद्धार्थगंधपुष्पादिक्षिप्त्वासजलंदद्यात् ॥ भयरोगादिदारिद्र्यपापक्षुदपमृत्यवः ॥ ऋणशोकमनस्तापानश्यंतुममसर्वदा ॥ इत्यनेनत्रिवारमर्घ्यंदद्यात् । ततःप्रार्थयेत् ॥ प्रसीददेवदेवेशप्रसीदपरमेश्वर ॥ प्रसीदसोमसर्वज्ञप्रसीदकरुणाकर॥ ततोब्राह्मणान्संतर्प्यरात्रिंनिनयेत्॥प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् । प्रधानसुमामहेश्वरौपलाशसमिद्बिल्वपत्रपायसाज्यद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिःपीठदेवताः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचार्यायदत्त्वाब्राह्मणान्भोजयेदिति ॥ इतिप्रदोषव्रतम् ॥ अथमार्गशीर्षशुक्लत्रयोदश्यामनंगत्रयोदशीव्रतं वर्षात्मकम् ॥

मासिमासिपूजादिकंभिन्नम् तिथ्यादिसंकीर्त्यआत्मनोदुर्भगत्ववंध्यात्वमृतवंध्यात्वादिदोषनिरसनपूर्वकंसौभाग्यपुत्रपौत्रसुखप्राप्तिद्वारा ऽर्द्धनारीश्वरप्रीत्यर्थमनंगत्रयोदशीव्रतंकरिष्येइतिसंकल्प्य उक्तविधिनापीठेअनंगरूपिणंमहेशंपूजयेत् ॥ विशेषोलिख्यते॥सर्वमासेषु त्रयोदश्यामुपोषणम् । मार्गशीर्षेमल्लिकादंतकाष्ठंनारिंगेणार्घ्यम् अनंगोदेवः नैवेद्यंफेणिकाः श्वेतपुष्पं मधुप्राशनं रात्रौजागरणं प्रात र्ब्राह्मणसुवासिनीभोजनपुरःसरं स्वयंभुंजीत । पौषे उदुंबरदंतकाष्ठं जातीपुष्पं दाडिमेनार्घ्यम् नाट्येश्वरोदेवः वटकनैवेद्यं चंदनभ क्षणम्॥माघे विष्णुक्रांतदंतकाष्ठं कुंदपुष्पं बीजपूरेणार्घ्यं शर्करानैवेद्यं योगेश्वरोदेवः मौक्तिकभक्षणम् ॥ फाल्गुने करंजकाष्ठं पद्मपुष्पं खर्जूरीफलं पयोनैवेद्यं वीरेश्वरोदेवः नालिकेरभक्षणम् । चैत्रे मल्लिकाकाष्ठं दमनकपुष्पं दमनकेनअर्घ्यं खर्जूरीनैवेद्यं विश्वरूपो देवः कर्पूरभक्षणम् । वैशाखे अपामार्गदंतकाष्ठम् मल्लिकापुष्पम् तेनैवार्घ्यम् नैवेद्यमपूपाः महारूपोदेवः जातीफलभक्षणम् । ज्येष्ठे सहदेवीकाष्ठम् बकुलपुष्पं श्रीफलेनार्घ्यम् मंडकनैवेद्यं लवंगभक्षणम् प्रद्युम्नोदेवः । आषाढे नारिंगकाष्ठं कदंबपुष्पं नालिकेरे णार्घ्यम् उमापतिर्देवः तिलबीजभक्षणम् । श्रावणे जातीकाष्ठं पद्मपुष्पं जंबूफलेनार्घ्यम् क्षीरसारनैवेद्यम् शूलपाणिर्देवः गन्धो दकभक्षणम् । भाद्रपदे कंकतीकाष्ठं चंपकपुष्पं दाडिमेनार्घ्यम् पूगफलनैवेद्यं सद्योजातोदेवः अगरुभक्षणम् । आश्विने कंकतीका ष्ठं करवीरपुष्पं कर्कटीफलेनार्घ्यम् त्रिदशाधिपोदेवः शुभ्रमंडकनैवेद्यं कनकांबुप्राशनम् । कार्तिके कदंबकाष्ठं रक्तोत्पलपुष्पम् कूष्मांडेनार्घ्यं पूरिकानैवेद्यं जगदीश्वरोदेवः दमनकभक्षणम् । सर्वत्रप्रदोषेपूजनंभक्षणंच । एवंचरित्वांऽतेउद्यापनंकुर्यात् ॥ वृता चार्यः लिंगतोभद्रस्थकलशेसौवर्णमर्धनारीश्वरंमहेशंपूजयेत् । प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् । प्रधानं महेशं पायसद्रव्येणअष्टोत्तरा

धिकसहस्रमष्टोत्तरशतंवातत्संख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये। ततश्छत्रोपानहकमंडलुभाजनवस्त्रपुरःसरमाचार्यंसंपूज्यततोद्वादशाष्टौचत्वारिवादंपतीन्संपूज्यपीठंगांचआचार्यायदत्त्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत ॥ इत्यनंगत्रयोदशीव्रतम् ॥ इतिश्रीमच्चित्तपावनकुलोत्पन्नश्रीशंकरभट्टविरचितायां व्रतकौमुद्यांत्रयोदशीव्रतानि ॥ छ ॥ अथचतुर्दशीव्रतानि ॥ अथनृसिंहजयंतीव्रतम् ॥ वैशाखशुक्लचतुर्दश्यांप्रदोषव्यापिन्यांनृसिंहजयंतीव्रतम् ॥ तच्चस्वातीनक्षत्रशनिवारसिद्धयोगवणिजकरणयोगेमहापुण्यदम् ॥ तिथ्यादिसंकीर्त्यआत्मनः अखिलपापक्षयपूर्वकशत्रुजयसुखसाधनावाप्तिद्वाराश्रीनृसिंहप्रीत्यर्थमाचरितस्यनृसिंहजयंतीव्रतस्योद्यापनंकरिष्ये ॥ इतिसंकल्प्य वृताचार्यःसर्वतोभद्रस्थकलशेहैमंलक्ष्मीनृसिंहं ॐनमोनृसिंहायेतिमूलमंत्रेणगायत्र्यावाप्रतिष्ठाप्योक्तविधिनासंपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात्। प्रधानंलक्ष्मीनृसिंहं विष्णोर्नुकमितिमंत्रेणअतोदेवेतिवा अष्टोत्तरशततिलपायसाज्याहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंव्रतपूर्तयेगांचआचार्यायदत्त्वा ब्राह्मणान्भोजयेत् ॥ इतिनृसिंहजयंतीव्रतम् ॥ अथानन्तव्रतम् ॥ तच्चभाद्रपदशुक्लचतुर्दश्याम्। चतुर्दशवर्षात्मकं यावज्जीवंवा । तच्चत्रिमुहूर्तोदयव्यापिन्यांकार्यम्। तिथ्यादिसंकीर्त्य आत्मनोऽखिलपापक्षयनिर्मुक्तिपूर्वकोत्तमसिद्धिपुत्रपौत्रपूरितविविधभोगधनधान्यपरमगतिप्राप्तिकामनयाचतुर्दशवर्षाचरितानंतव्रतोद्यापनंकरिष्ये ॥ इतिसंकल्प्य नित्यवत्स्वयंदेवंसंपूजयेत् । ततोवृताचार्यः सर्वतोभद्रेब्रह्मादिदेवताआवाह्यतदुपरिकलशंप्रतिष्ठाप्यतत्रयमुनामावाह्य श्रीसूक्तेननाममंत्रेणवासंपूज्य तदुपरिअक्षतपूरितपूर्णपात्रंनिधायतत्राष्टदलंविरच्य तत्रस्वर्णनिर्मितंचतुर्दशग्रंथियुतमनंतं सहस्रशीर्षेतिमंत्रेणस्थापयेत्। तदुत्तरतः सप्तधान्योपरिविस्तृतशय्यायां स्वर्णनिर्मितंलक्ष्मीसहितंहैमंहल

मुसलयुतमनंतंदेवमतोदेवाइतिइदंविष्णुरितिवामंत्रेणस्थापयेत् । स्वर्णदोरकप्रतिमयोः पुरुषसूक्तेनश्रीमदनंतायनमः इतिनाममंत्रेणवा
पूजावार्षिकवत्कार्या ॥ अथग्रंथिदेवताःपूजयेत् । क्रमेण विष्णुः १ अग्निः २ आदित्याः ३ सहस्राक्षः ४ पितामहः ५ इंद्रः ६ पिनाकी
७ विघ्नेशः ८ स्कन्दः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४ ततः शय्यायांप्रतिमायाःपरितः शंखं १ चक्रं
२ गदां ३ पद्मं ४ तद्बहिर्नाममंत्रेण अनंतं १ कपिलं २ दक्षं ३ मनुं ४ प्रजापतिं ५ संकर्षणं ६ कालं ७ वनमालिनं ८ त्रिविक्रमं
९ अहोरात्रम् १० अर्धमासं ११ मासं १२ ऋतून् १३ अयने १४ संवत्सरं १५ इद्वत्सरम् १६ अनुवत्सरं १७ वत्सरम् १८ प्रजा
ध्यक्षम् १९ अजितं २० सर्वभूतं २१ प्रद्युम्नम् २२ अनिरुद्धं २३ श्रीधरं २४ पुरुषोत्तमं २५ वामनं २६ पद्मनाभं २७ विश्वरूपम्
२८ त्रिविक्रमं २९ विष्णुम् ३० अच्युतं ३१ तद्बहिरष्टवसून् ८ तद्बहिरेकादशरुद्रान् ११ तद्बहिर्द्वादशादित्यान् १२ तद्बहिर्नवग्र
हान् ९ तद्बहिरष्टभैरवान् ८ तद्बहिर्मेषादिद्वादशराशीन् १२ तद्बहिरश्विन्यादिनक्षत्राणि २८ तद्बहिर्ब्राह्म्यादिसप्तमातॄः ७ तद्बहिश्चै
त्रादिद्वादशमासान् १२ तद्बहिर्दीप्त्यादिशक्तीः तद्बहिर्विष्कंभादियोगान् २७ आवाह्यपीठपरितः फलपक्वान्नपूरितांश्चतुर्दशकुंभांश्च
चतुर्दशनामभिःस्थापयेत्पूजयेच्च ॥ तेचमंत्राः ॥ अनंतायनमः १ संकर्षणाय० २ कमलाय० ३ शेषाय० ४ वासुदेवाय० ५ विश्व
नाथाय० ६ विश्वरूपाय० ७ पद्मनाभाय० ८ दामोदराय० ९ जगन्नाथाय० १० चतुर्भुजाय ११ श्रीकंठाय० १२ केशवाय०
१३ सर्वात्मने० १४ ततःपुष्पपूजोत्तरंकलशस्थापनोक्तचतुर्दशनामभिः अंगानिपूजयेत् ॥अनंतायनमः पादौपूजयामि संकर्षणाय०
गुल्फौ० कालाय० जंघे० शेषाय० जानुनी० वासुदेवाय० ऊरू० विश्वाय० गुह्यं० विश्वरूपाय० कटी० पद्मनाभाय० नाभिं० दा

मोदराय० उदरं० जगन्नाथाय० हस्तद्वयं० चतुर्भुजाय० बाहू० श्रीकंठाय० कंठं० केशवाय० ललाटं० सर्वात्मने० शिरः० अनं
ताय० सर्वांगंपू० ॥ ततः। नमस्तेदेवदेवेशनमस्तेधरणीधर ॥ नमस्तेसर्वनागेन्द्रअनंतायनमोनमः ॥ इतिनमस्कारः ॥ ततःप्रार्थयेत्।
अनंतकामान्मेदेहिसर्वकामफलप्रद ॥ अनंतायनमस्तुभ्यंपुत्रपौत्रान्प्रवर्द्धय ॥ व्रतेनानेनसंतुष्टोभवत्विहसदामम ॥ ततःपुराणपठना
दिनारात्रिंनिनयेत्। प्रातरग्निप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम् ॥ श्रीमदनंतमश्वत्थसमित्तिलव्रीहियवघृतपायसद्रव्यैः प्रत्येकम
ष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताः आवरणदेवताश्चैकैकयाज्याहुत्यापायसाहुत्यावा ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥
स्थापनमंत्रैर्होमः ॥ केचिद्दिवैवहोममिच्छंति। प्रातर्ब्राह्मणभोजनमात्रम्। दिवैवसर्वम्। ततःपीठंसंपूज्यवस्त्रादिनाआचार्यंसम्पूज्यपी
ठंदद्यात् ॥ तत्रमंत्रः ॥ प्रतिगृह्णद्विजश्रेष्ठसमस्तफलदायक ॥ त्वत्प्रसादादहंविप्रविमुच्येभवबंधनात् ॥ अनन्तःप्रतिगृह्णातिअनंतो
वैददातिच ॥ अनंतस्तारकोभाभ्यामनंतायनमोनमः ॥ ततः पूर्वेद्युः निमंत्रितांश्चतुर्दशब्राह्मणान्वस्त्रादिनासम्पूज्य स्थापितचतुर्द
शकलशान्पक्वान्नादिपूरितान्दक्षिणासहितांस्तेभ्यः प्रतिगृह्णद्विजश्रेष्ठेतिमंत्राभ्यांदद्यात् व्रतपूर्तयेगांचदद्यात् क्षमापयेत् ॥ क्रियाहीनं
भक्तिहीनंद्रव्यहीनंतथैवच ॥ मंत्रहीनंकृतंयच्चपरिपूर्णंतदस्तुमे ॥ ततोब्राह्मणभोजनपुरःसरं स्वयंभुंजीत ॥ इत्यनंतचतुर्दशीव्रतम् ॥ अ
थकदलीव्रतोद्यापनं भविष्ये ज्येष्ठशुक्लचतुर्दश्यामुक्तम् ॥ तत्रैवपुनः कार्तिकेमाघेवैशाखेवाकार्यम् ॥ अथवाऽस्तादिरहितेपुण्यमासे
पौर्णमास्यांवाकार्यम्। स्कान्देतु ज्येष्ठशुक्लत्रयोदश्यामुक्तम्। तत्रैवत्रिदिनमुपोष्य पौर्णमास्यामधिवासनमुक्तम् ॥ तत्रैवयस्मिन्देशे
कदलीनलभ्यतेतदासुवर्णकदलींकृत्वाविधिनापूजाहोमादिकंकृत्वादद्यादित्युक्तम् ॥ अथप्रयोगः ॥ तत्रव्रतीपूर्वेद्युरेकभुक्तोनक्ताशीवा

द्वितीयेऽह्नि नद्यादौ स्नात्वा पंचगव्यं प्राश्य संकल्पं कुर्यात् । तिथ्यादि संकीर्त्य आत्मन इहजन्मनि जन्मांतरे वा सौभाग्यारोग्यपुत्रपौत्रान्न
लक्ष्मीवृद्धिसर्वदुःखनाशनपूर्वकसुमामहेश्वरप्राप्तिकामः कदलीव्रतोद्यापनं करिष्ये ॥ इति संकल्प्य यदा ज्येष्ठादिद्वादशमासेषूक्तपूजादि
नक्तं तत्तदोद्यापनदिने आदौ क्रमेण पूजादिकं कुर्यात् ॥ कदल्या आलवालं कृत्वा उपरि मंडपं चतुर्द्वारं कृत्वा पूजयेत् ॥ तत्र ज्येष्ठे जातीदंत
काष्ठं गौरीति कदलीनाम पाटलपुष्पं । कदल्यै कामदायिन्यै मेधायै च नमो नमः ॥ रंभायै भूतसारायै सर्वसौख्यप्रदे नमः ॥ सर्वमासेष्वयं पू
जामंत्रः ॥ एवं षोडशोपचारैः संपूज्योत्तमोदकेन सिंचयेत् ॥ तत्रमंत्रः ॥ यथा रंभे विवृद्धिस्तु शाखादीनां सदा भवेत् ॥ तथा वर्द्धय मां देवि
सेचनात्पार्वतीप्रिये ॥ ततः प्रार्थयेत् । यथा यथा हि प्रसवो वर्द्धते कदली तव ॥ तथा मनोरथानां मे प्रभवा भवतु स्वयम् ॥ आषाढे क्रमेण दं
तकाष्ठं कदलीनाम पुष्पं च ज्ञेयं करंज मीश्वरी बिल्वपत्रम् । श्रावणे कुमुदं कुमुदा कुमुदम् । भाद्रे पुत्तलिका भगवती कदंबम् । आश्विने माल
ती अतुला जाती ॥ कार्तिके शतपत्रं कीर्तिः शतपत्रम् ॥ मार्गशीर्षे चंपकं मार्गदायिनी चंपकम् । पौषे कमलं पुष्टिकरी कमलम् ।
माघे दाडिमं माहेश्वरी दाडिमम् । फाल्गुने मधुकं मदोत्कटा मधुकम् । चैत्रे मल्लिका चैतन्यरूपा मल्लिका । वैशाखे अपामार्ग विमला
बहुविधपुष्पाणि । द्वादशमासेषु क्रमेण धूपान्नैवेद्यांश्च चंदनं कर्पूरं गुग्गुलं काश्मीरं देवदारुं गोरोचनं मेषशृंगं वटकाः उदुंबराः अपूपाः मोद
काः मंडकं पायसं घृतौदनं मुद्गचूर्णं सोहालिका खण्डवेष्टिका फेनिका दध्योदनमेवं स्वयं संपूजयेत् । वृताचार्यः कदलीमूलदेशे
मृदा वेदिं विधाय तत्र लिंगतोभद्रे उक्तविधिना ब्रह्मादिदेवता आवाह्य तदुपरि कलशस्थपूर्णपात्रे हैमं शिवं गौरीं च त्र्यंबकमिति कद्रुद्राये
ति वा गौरीर्मिमायेति गायत्र्या वा मंत्राभ्यां प्रतिष्ठाप्य पूजयेत् पुरतो वृषभं राजतं च । ततः कदलीं पूजयेत् कदल्यै कामदायिन्यै इत्यनेन ।

कदलीपरितोलोकपालानावाह्य ततस्तैलहरिद्रादिनामंगलस्नानंकृत्वास्त्रीभूषणैर्भूषयित्वाआवाहनाद्युपचारैःसंपूजयेत् । पुरतःआदर्शं
चामरंछत्रंचउपरिपूरिकाबंधनंपरितइक्षुदंडवेष्टनंकदल्याश्चतुर्दिक्षुगुडपिष्टाचलंजीरकंलवणशुभ्राक्षताः । ततःपुराणपठनादिनारात्रिं
निनयेत् । प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् । अत्रप्रधानं शिवंगौरींकदलींचपलाशसमिन्मधुसर्पिस्तिलव्रीहिद्रव्यैः प्रत्येकमष्टोत्तर
सहस्रमष्टोत्तरशतमष्टाविंशतिर्वातत्संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या ॥ क्रमेणहोममंत्राः ॥ कद्रुद्राय० गौरीर्मिमा
येति० ॐ आंह्रींक्लींकामिन्यैविद्महे त्रैलोक्यक्षोभिण्यैधीमहि ॥ तन्नःकदलीप्रचोदयात् ॥ ततउत्तरपूजांकृत्वाप्रार्थ्य ॥ उमेगौरिनम
स्तुभ्यंनमस्तेविश्वधारिणि ॥ परमानंदरूपिण्यैकदल्यैतेनमोनमः ॥ ततश्चतुर्विंशतिंषोडशाष्टौयथाशक्तिवामिथुनानिवस्त्रादिना
संपूज्य वंशपात्रस्थसौभाग्यद्रव्ययुतंफलदक्षिणादियुतंवायनंदद्यात् । ततआचार्यायसंपूज्यपीठंकदलींचदद्यात् ॥ तत्रमंत्रः ॥ कद
लींकामदात्रींचसर्वसौख्यप्रदायिनीम् ॥ गिरिजाहररूपांवैब्राह्मणायददाम्यहम् ॥ प्रतिगृह्णद्विजश्रेष्ठसमस्तफलदायक ॥ कदल्याश्च
प्रदानेनपूर्णाःसंतुमनोरथाः ॥ कदलीप्रतिगृह्णातिकदलीवैददातिच ॥ कदलीतारकाचैवकदल्यैतेनमोनमः ॥ कदलीदानसांगतासिद्ध्य
र्थंहिरण्यंदक्षिणात्वेनदद्यात् ॥ व्रतपूर्तयेगांचदत्त्वाऽन्यान्ब्राह्मणान्दक्षिणादिभिःप्रतोष्यब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुं
जीत ॥ इतिकदलीव्रतम् ॥ अथवैकुण्ठचतुर्दशीव्रतम् ॥ तच्चकार्तिकशुक्लचतुर्दश्यामरुणोदयव्यापिन्यांकार्यम् । तिथ्यादिसंकीर्त्यात्मनः
सर्वपापक्षयपूर्वकशिवपदप्राप्तिकामनयाऽऽचरितवैकुंठचतुर्दशीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःलिंगतोभद्रस्थकलशेहैमंविश्वेश्वरंपूजये
त् । प्रातरग्निंप्रतिष्ठाप्यघृताक्ततिलैरष्टोत्तरशतं ॐनमःशिवायेतिमंत्रंहुत्वाव्रतपूर्तयेगांचदद्यात् ॥ इतिवैकुंठचतुर्दशीव्रतम् ॥ अथशिव

रात्रिव्रतं स्कंदपुराणे ॥ चतुर्दशवर्षांत्मकंयावज्जीवंवा माघेकृष्णचतुर्दश्यांनिशीथव्यापिन्यांकार्यम् । तिथ्यादिसंकीर्त्यआत्मनःसर्वपापक्षयपूर्वकाक्षयभोगमोक्षप्राप्त्यर्थमाचरितशिवरात्रिव्रतोद्यापनंकरिष्ये ॥ वृताचार्यः अन्यैर्द्वादशब्राह्मणैःसहपूजामारभेत् । द्वादशलिंगोद्भवेपीठेउक्तविधिनाब्रह्मादिदेवताःसंपूज्यद्वादशलिंगेषुद्वादशकलशान्मध्येएकंतद्धुपरिपूर्णपात्राणिनिधायतत्रहैमीःप्रतिमाःपूजयेत् । तत्रमध्यमकुंभेउमामहेश्वरंत्र्यंबकमितिमंत्रेणप्रतिष्ठाप्यपुरतोराजतंवृषभंचप्रतिष्ठापयेत् । ततोद्वादशब्राह्मणान्द्वादशलिंगस्थकलशेषुद्वादशप्रतिमाःपूजयेयुः । तत्रप्राच्यांमहेशम् अघोरं पशुपतिं दक्षिणस्यांपंचवक्त्र मुग्रं रुद्रं पश्चिमायां भवंशर्वंशंभुम् उत्तरे शिवंभीमंभीमपराक्रमं प्रतिकलशं परितोलोकपालानितिप्रतिष्ठाप्यरुद्राभिषेकपूर्वकंषोडशोपचारैःपूजयेत् । प्रतियामंपूजाकार्या।एकैववा । पुराणपठनादिनारात्रिंनिनयेत् । प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् । अत्रप्रधानम् उमामहेश्वरं पायसबिल्वपत्रतिलदूर्वाघृतद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः द्वादशकलशस्थदेवताः अष्टाष्टसंख्याकाहुतिभिः तैरेवद्रव्यैः परिवारदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥एवंहोमंसंपाद्यपीठदेवतांपूजयेत् ॥ अथांगपूजा ॥ शर्वाय० पादौ० पशुपतये० ऊरू० रुद्राय० कटी० ईश्वराय० बाहू० सद्योजाताय० कंठं० शंभवे० मुखं० वामदेवाय० चक्षुषी० भीमाय० भ्रुवौ० उमापतये० ललाटं० सर्वव्यापिने० मूर्धानं० ॥ तत आचार्यं द्वादशब्राह्मणांश्चवस्त्रादिनासंपूज्य तेभ्यःप्रतिमासहितकलशान्दद्यात् ॥ तत्रमंत्रः ॥ शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो ॥ तवरूपप्रदानेन ममसंतुमनोरथाः ॥ ततोव्रतपूर्तयेत्रयोदशगाःअथवाएकांगामाचार्यायान्येभ्योदक्षिणांदद्यात् ॥ ब्राह्मणान्संतर्प्यस्वयंभुंजीत ॥ लिंगपुराणेतुप्रकारांतरेणोक्तम् ॥ मण्डलेउमामहेश्वरंसंपूज्यप्रातःपूर्वोक्तरीत्यातिलव्रीहियवैरष्टोत्तरशतंहोमंहुत्वाचतुर्दशब्राह्मणांश्चतुर्दशना

मभिः संपूज्य जलपूरितचतुर्दशकलशान्वस्त्रादिदक्षिणासहितान्दद्यात् ॥ चतुर्दशनामानि ॥ अजैकपादहिर्बुध्न्योभवः शर्वउमापतिः ॥ रुद्रःपशुपतिः शंभुर्वरदःशुभईश्वरः ॥ महादेवोहरोभीमोनामान्येवंचतुर्दश ॥ एतैर्होमःप्रकर्तव्यः कुंभदानेपितान्स्मरेत् ॥ अष्टाहुति संख्याकोबिल्वपत्रैर्होमः ॥ अन्यत्समानम् ॥ इतिशिवरात्रिव्रतम् ॥ अथमलमासव्रतं पाद्मे ॥ मलमासस्यकृष्णपक्षेचतुर्दश्यांत्रयोदश्यामष्टम्यांवातृतीयायांनवम्यांवाऽन्यतमतिथौवाकार्यम् ॥ तिथ्यादिसंकीर्त्यआत्मनोदारिद्र्यपापदुःखनाशनसत्पुत्रप्राप्तिपूर्वकाऽतुल भोगसिद्धयेसवितृरूपजनार्दनप्रीत्यर्थंचमलमासव्रतंकरिष्येइतिसंकल्प्य मध्याह्नेसर्वतोभद्रस्थकलशेहैमंलक्ष्मीयुतंजनार्दनंसंपूज्यनानाविधपक्वान्ननैवेद्यंदद्यात् ॥ फलपुष्पोपेतमर्घ्यंदद्यात् ॥ तत्रमंत्रः ॥ देवदेवजगन्नाथप्रलयोत्पत्तिकारक ॥ गृहाणार्घ्यंमयादत्तंकृपां कुरुममोपरि ॥ ततःसपत्नीकंब्राह्मणंवस्त्रादिनासंपूज्यत्रयस्त्रिंशदपूपान्कांस्यपात्रेनिधायसघृतंहिरण्यंवायनंब्राह्मणायानिवेदयेत् ॥ तत्र मंत्रः ॥ विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने ॥ नरकोत्तारणार्थायह्यच्युतःप्रीयतामिति ॥ इति दत्त्वाछत्रोपानद्भूषणाच्छादनादियुतां शय्यांचदत्त्वापीठंव्रतपूर्तयेगांचदत्त्वानानाविधपक्वान्नैर्ब्राह्मणान्संतर्प्यआशिषोगृहीत्वास्वयंभुंजीत ॥ इति श्रीमच्चितपावनकुलोत्पन्न० व्रतोद्यापनकौमुद्यांचतुर्दशीव्रतानि ॥ ७ ॥ अथपौर्णमासीव्रतानि ॥ तत्रज्येष्ठशुक्लपूर्णिमायांपूर्वविद्धायांवटसावित्रीव्रतम् ॥ तच्च त्रयोदशीमारभ्यपूर्णिमांतंकर्तव्यम् । तदुक्तंस्कंदभविष्ययोः । पूर्णिमायांवाकार्यम् ॥ तत्रविधिः ॥ नद्यादौतिलामलकरजनीविलेपन पूर्वकंस्नात्वावार्षिकवत्पूजादिकंनिर्वर्त्यउद्यापनसंकल्पंकुर्यात् ॥ तद्यथा । तिथ्यादिसंकीर्त्यममभर्तुःपुत्रादीनांचआयुरारोग्यैश्वर्यादिप्राप्तिपूर्वकमिहजन्मनिजन्मांतरेचआत्मनःअवैधव्यप्राप्तयेआचारितवटसावित्रीव्रतोद्यापनंकरिष्यइतिसंकल्प्य वृताचार्यःवटमूलेगृहे

 


वामृदावेदिं विधाय तत्रसर्वतोभद्रंविरच्यतत्रब्रह्मादिदेवताःसंपूज्य तत्रकलशद्वयंप्रतिष्ठाप्यतत्रैकस्मिन्कलशेहैमंब्रह्मजज्ञानमितिमंत्रेणब्र
ह्माणंगायत्रीमंत्रेणहैमींसावित्रींचप्रतिष्ठाप्यतदुत्तरद्वितीयकुंभेपलादधिकरजतस्यराजतपर्यंकेहैमीः सत्यवत्सावित्रीयमनारदप्रतिमाःना
ममंत्रैरावाह्यपुरतःकाष्ठभारंकुठारंचहैमंराजतंवानिधायपूजयेत्॥अशक्तावेकस्मिन्कलशेसर्वेषांपूजनम्। पुष्पोत्तरमंगपूजा ॥ सावित्र्यै०
पादौपू० प्रसावित्र्यै० जानुनीपू० कमलपत्राक्ष्यै० कटी० भूतधारिण्यै० उदरं० गायत्र्यै० कंठं० ब्रह्मप्रियायै० शिरःपू० । अथब्रह्मसत्य
वतोः। धात्रे० पादौ० परमेष्ठिने० जानुनी० अग्निरूपाय० कटी० वेधसे० उदरं० हिरण्यगर्भाय० कंठं० चतुराननाय० मुखं० ब्रह्मणे०
शिरःपू० ॥ मंत्रपुष्पानंतरमर्घ्यंदद्यात्रजतादिपात्रेणद्वयोरपि॥ ॐकारपूर्वकेदेविवीणापुस्तकधारिणि ॥ वेदमातर्नमस्तेऽस्तुअवैधव्यं
प्रयच्छमे ॥ पतिव्रतेमहाभागेभर्तुश्चप्रियवादिनि ॥ अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते ॥ पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोनमः॥
अथब्रह्मसत्यवतोः॥त्वयादृष्टंजगत्सर्वंसदेवासुरमानुषम् ॥ सत्यव्रतधरोदेवब्रह्मरूपनमोस्तुते॥ अथयमाय। त्वंकर्मसाक्षीलोकानांशुभा
शुभविवेककृत् ॥ वैवस्वतगृहाणार्घ्यंधर्मराजनमोस्तुते ॥ नारदाय । नारदायनमस्तुभ्यंसुरेशाद्यभिवंदित ॥ गृहाणार्घ्यंमयादत्तमवै
धव्यंप्रयच्छमे ॥ ततःप्रार्थयेत् । सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी ॥ तेनसत्येनमांपाहिदुःखसंसारसागरात् ॥ मयाकृतंमहाघो
रंजन्मांतरशतैरपि ॥ भस्मीभवतुतत्सर्वंमवैधव्यंचदेहिमे ॥ ब्रह्मसत्यव्रतोः ॥ अवियोगोयथादेवसावित्र्याससवितस्तव ॥ अवियो
गस्तथास्माकंभूयाज्जन्मनिजन्मनि ॥ सावित्र्याः । सावित्रित्वंयथादेविचतुर्वर्षशतायुषम् ॥ पतिंप्राप्तासिगुणिनंममदेवितथाकुरु
॥ यमस्य । कर्मसाक्षिञ्जगत्पूज्यसर्ववंद्यप्रसीदमे ॥ संवत्सरव्रतंसर्वंपरिपूर्णंतदस्तुमे ॥ ततःसुवासिनीःसंपूज्यवायनानिदत्त्वाकथाश्रव

णादिनारात्रिंनिनयेत्॥प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात्॥सावित्रीं गायत्रीमंत्रेणपायसघृतदूर्वातिलव्रीहिद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याका हुतिभिः ब्रह्माणंधर्मराजंनारदंचव्याहृतिमंत्रेणतिलव्रीहियवद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहु त्यायक्ष्ये । सत्यवत्सावित्र्योर्ब्रह्मसावित्र्योरैक्यात्पृथग्घोमादिकंनास्ति । पूजादौतत्तन्मंत्राभ्यामेवतयोःपूजाइत्युक्तत्वात् । एवंहोमंसं पाद्य ततश्चतुर्विंशतिंद्वादशाऽष्टौचत्वारिवामिथुनानिवस्त्रादिनासम्पूज्य पूरिकामोदकमंडकादिकूष्मांडनारिकेरमातुलिंगदाडिमबी जपूरादिफलहरिद्राकुंकुमकेशविचूर्णिकाकज्जलकंठसूत्रकंकणमौक्तिकपादभूषणवस्त्रकंचुक्यादर्शपात्रादिदक्षिणातांबूलादियुतशूर्पेसहि तंवायनंदद्यात् ॥ तत्रमंत्रः ॥ सोपस्करंद्विजश्रेष्ठव्रतसंपूर्तिकारकम् ॥ वायनंतेप्रयच्छामिसावित्रीप्रीयतामिति ॥ ततःपीठंव्रतपूर्तयेगां चदत्त्वाब्राह्मणान्संतर्प्य आशिषोगृहीत्वाइष्टजनैःसहभुंजीतः ॥ इयानत्रविशेषः ॥ रात्रावरुंधतींदृष्ट्वासंपूज्यअर्घ्यंदद्यात् ॥ अ रुंधतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे ॥ पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुते ॥ इतिदत्त्वाभुंजीत ॥ इतिवटसावित्रीव्रतम् ॥ अथ द्वात्रिंशत्पौर्णमासीव्रतम् ॥ भाषयाबत्तिशीपौर्णमासीत्युच्यते ॥ तदुक्तंभविष्ये " पूर्णिमामार्गशीर्षस्यतस्यांप्रारभ्यतेव्रतम् ॥ उम यासहितोदेवःपूजनीयोमहेश्वरः ॥ एकैकंदीपकंकृत्वामासिमासिचदापयेत् एवंसार्द्धद्वयंवर्षद्विमासाधिकमाचरेत् ॥ नभसःपूर्णिमायां चकुर्यादुद्यापनंततः ॥ अथवाशुभमासस्यपूर्णिमायांसमापयेत् ॥ चतुर्दश्यामुपवसेद्रात्रौपूजनमारभेत् ॥ तिथ्यादिसंकीर्त्य आत्मनः इहजन्मनिजन्मांतरेचवैधव्यनाशपुत्रपौत्रसौभाग्यादिप्राप्तिपूर्वकंभर्त्तुरायुर्वृद्धिद्वाराउमामहेश्वरप्रीत्यर्थमाचरितस्यद्वात्रिंशत्पौर्णमासीव्र तस्यपूर्णतासिद्ध्येतदुद्यापनाख्यंकर्मकरिष्ये॥वृताचार्यः लिंगतोभद्रस्थकलशेहैममुमामहेशं ॐनमःशिवायेतिमंत्रेणस्थापयेत्पूजयेच्च।

प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ उमामहेशं यवतिलाज्यद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाऽऽज्याहु
त्यायक्ष्ये । ततोद्वात्रिंशद्वंधनयुतवंशपात्रेव्रीह्युपरिस्थेद्वात्रिंशन्महादीपान्द्वात्रिंशत्फलवस्त्रदक्षिणादियुतान्कृत्वादद्यात् ॥ तत्रमंत्रः ॥
महेशःप्रतिगृह्णातिमहेशोवैददातिच ॥ महेशस्तारकोभाभ्यांमहेशायनमोनमः ॥ द्वात्रिंशद्भिःफलैर्दीपैःसंयुतंवस्त्रवेष्टितम् ॥ वाणकंतव
तुष्ट्यर्थंददामिगिरिजापते ॥ ततोद्वात्रिंशद्ब्राह्मणान्सदन्नेनसंतर्प्य आशिषोगृहीत्वास्वयंभुंजीत ॥ इतिद्वात्रिंशत्पूर्णिमाव्रतम् ॥
अथकोकिलाव्रतम् ॥ तदुक्तंभविष्ये । यस्मिन्वर्षे आषाढद्वयं तदाशुक्लाषाढपूर्णिमायांव्रतग्रहणम् । श्रावणपूर्णिमायांस
मापनम् । अशक्तेनदिनाष्टकंत्रिदिनंवाकार्यम् ॥ तत्रविधिः । स्नानाष्टकंहरिद्राकुंकुमलेपनपूर्वकंततस्तिलामलकैः ततःस
र्वौषधिभिस्ततोवचापिष्टेन ततःस्नानमंत्रेण स्नास्येऽहंपरयाभक्त्यासमुद्दिश्याकुरूपतः ॥ सौभाग्यंसुंदरंरूपंकुरुजन्मनिजन्मनि ॥
ततः स्नात्वासूर्यायाऽर्घ्यंदत्त्वागृहेपूजांकुर्यात् । तद्यथा । ममेहजन्मनिजन्मांतरेच सर्वपापक्षयपूर्वकं पुत्रपौत्राऽवैधव्यनिःसापत्न्य
लक्ष्मीसौभाग्यरूपलावण्याद्यभिवृद्धिद्वारागौरीरूपकोकिलाप्रीत्यर्थंकोकिलाव्रतंकरिष्ये ॥ इतिसंकल्प्य कोकिलांपूजयेत् ॥ तद्यथा ।
सौवर्णींरौप्यपादांमौक्तिकनेत्रांप्रवालमुखींपंचरत्नपृष्ठींराजतचूतवृक्षस्थांपक्षिरूपिणींकोकिलांकृत्वा तिलपूरिततामप्रपात्रेनिधायपूजयेत्
अशक्तौ तिलपिष्टमयींवाकुर्यात् ॥ तस्याःप्रत्यहंविसर्जनम् ॥ धातुमय्यांविकल्पः । चूतचंपकवृक्षस्थांस्वर्णपक्षादिसंयुताम् ॥ चिंत
येत्पार्वतींदेवींकोकिलारूपधारिणीम् इतिध्यात्वा ॥ श्रीसूक्तेनगौरीमिमायेतिमंत्रेणनाममंत्रेणवापूजयेत् । तिलस्नेहेतिलमुखेतिलसौ
ख्येतिलप्रिये ॥ सौभाग्यंधनपुत्रांश्चदेहिमेकोकिलेनमः ॥ इत्यर्घ्यम् ॥ पुष्पोत्तरमंगपूजा ॥ शिवायै० शिरःपूजयामि वनवासिन्यैन०

ललाटंपू० सुरूपायै० भ्रूमध्यं० पार्वत्यै० चंचूं० तिर्यग्रूपधारिण्यैनमः कंठं० कोकिलायै० हृदयं० पक्षिरूपिण्यै०गुह्यंपू० पद्मवत्यै० पादौ० कृष्णवर्णायैन० सर्वांगं० कोकिलेकृष्णवर्णेत्वंसदावससिकानने ॥ भवान्यैहरकांतायैकोकिलायैनमोनमः ॥ इतिनमस्कारः ॥ पुनरर्घ्यम् ॥ अर्घ्यंगृहाणदेवेशिवांछितार्थप्रदायिनि ॥ आषाढस्याऽसितेपक्षेमेघवर्णेहरप्रिये ॥ कोकिलेत्वंजगन्मातर्गृहाणार्घ्यंनमोऽस्तुते ॥ ततः प्रार्थयेत् ॥ रूपंदेहिजयंदेहिसौभाग्यंदेहिमेसदा ॥ पुत्रान्देहिधनंदेहिसर्वान्कामान्कुरुष्वमे ॥ काकवंध्याविवत्साचमृतवंध्याचदुःखदा ॥ तास्तुवैफल्यतांयांतुकोकिलेत्वत्प्रसादतः ॥ त्वयालब्धःपितुर्लोकेशंकरोलोकशंकरः ॥ अतोऽहंत्वत्प्रसादेनलभेयंपतिमुत्तमम् ॥ ततोगुडमिश्रिततिलानांवायनंदद्यात् ॥ देव्यैतिलगुडमिश्रितपक्वान्ननैवेद्यंप्रदोषकालेपूजनम् ॥ स्वयंतिलगुडभक्षणं हविष्याशनंवा ॥ ततोविसर्जनम् ॥ देविचैत्ररथोत्पन्नेविंध्यपर्वतवासिनि ॥ अर्चितापूजिताऽसित्वंकोकिलेहरवल्लभे ॥ कोकिलेकलकंठासिमाधवेमधुरस्वरे ॥ वसंतेवससेदेविगच्छत्वंनंदनंवनम् ॥ इतिमंत्रेणविसर्जनम् ॥ अथवा न कुर्यात् अंतेकुर्यात् । एवंमासपर्यन्तंचरित्वांतेपूर्णिमायामुद्यापनंकुर्यात् । तद्यथा । पूर्वोक्तसंकल्पंकृत्वा आचरितकोकिलाव्रतसांगतासिद्ध्यै कोकिलारूपिणीगौरीप्रीत्यर्थं तदुद्यापनाख्यंकर्मकरिष्ये ॥ वृताचार्यः एकलिंगोद्भवेभद्रेब्रह्मादिदेवताःसंस्थाप्य तदुपरिप्रस्थपरिमितसप्तधान्योपरिताम्रंकृष्णवस्त्रवेष्टितकलशंप्रतिष्ठाप्य तदुपरिएकविंशतिवंधात्मकतिलपूर्णवंशपात्रंनिधाय तत्रपूर्वोक्तलक्षणांहैमींकोकिलां गौरीर्मिमायेतिमंत्रेणप्रतिष्ठाप्यपूर्वोक्तप्रकारेणपूजयेत् ॥ अशक्तस्तुमासपर्यन्तंपूजितामेवाधिवासयेत् । रात्रौजागरणंकृत्वाप्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानम् । कोकिलारूपिणींगौरींगौरीर्मिमायेतिमंत्रेण तिलचंपकपुष्पतंडुलपायसाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः

तथाव्याहृतिमंत्रेणबिल्वपत्रैः शतत्रयपरिमिताहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाऽऽज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यपंचमिथुनानिसम्पूज येदशक्तौद्वयम् ॥ तेभ्योगुडतिलमिश्रितपक्वान्नपूरितकरकयुतंसौभाग्यद्रव्यदक्षिणान्वितंवंशपात्रस्थंकृष्णोर्णावस्त्रवेष्टितंवायनंदद्यात् ॥ तत्रमंत्रः ॥ सोपस्करंद्विजश्रेष्ठवायनंव्रतपूर्तये ॥ ददामितेगृहाणेदंकोकिलाप्रीयतामिति ॥ ततःपीठंव्रतपूर्त्यैगांचदत्त्वाब्राह्मणान्वस्त्रा दिभिःप्रतोष्यआशिषोगृहीत्वास्वयंभुंजीत ॥ इतिकोकिलाव्रतम् ॥ अथभाद्रपदपूर्णिमायामुमामहेश्वरव्रतंशिवरहस्ये ॥ तत्रपूर्वेद्युः सायंशिवंसंपूज्यहविष्याशी शिवध्यानपरोदेवसन्निधौनिद्रांकुर्यात् ॥ प्रातर्नद्यादौस्नात्वानित्यकर्मनिर्वर्त्यभस्मोद्धूलितसर्वांगोदेवागा रंप्रविश्यतिथ्यादिसंकीर्त्य आत्मनोऽशेषपापक्षयदुःखदारिद्र्यनाशपूर्वकशिवपदप्राप्तिकामनया उमामहेश्वरव्रतंकरिष्ये ॥ इतिसंकल्प्य चतुर्द्वारोपशोभितमंडपेभद्रपीठे कलशंप्रतिष्ठाप्य तत्रपूर्णपात्रेप्रतिसरग्रंथिकुशंगव्याक्तंकुंकुमांकितंपंचदशग्रंथियुतंदोरकंनिधाय त त्रसौवर्णंराजतंवापलादधिकंप्रतिमाद्वयमुमामहेश्वरयोः त्र्यंबकंगौरीर्मिमायेतिमंत्राभ्यांप्रतिष्ठाप्यविध्युक्तप्रकारेणपूजयेत् ॥ अथध्या नम् ॥ पंचाननमुमाक्रांतमनलेंदुरविप्रभम् ॥ चंद्रार्द्धशेखरंनित्यंजटामुकुटमंडितम् ॥ भस्मोद्धूलितसर्वांगरुद्राक्षाभरणान्वितम् ॥ ऋतंसत्यंपरंब्रह्मविष्णुब्रह्मादिवंदितम् ॥ विश्वंविश्वेश्वरंदेवंध्यायामिपरमेश्वरम् ॥ ध्यायामिपरमांगौरीमादिविद्यांसुरेश्वरीम् ॥ लक्ष्मीसे वितपादाब्जांचंद्रार्द्धकृतशेखराम् ॥ ब्रह्मेंद्रोपेन्द्रजननींमहेशार्द्धांगभामिनीम् ॥ प्रसन्नवदनांशांतांध्यायेद्देवीमुमांसतीम् ॥ एवंध्यात्वा पंचब्रह्ममंत्रैः षोडशोपचारैःपूजयेत् ॥ पुष्पोत्तरमंगपूजा ॥ कपर्दिनेन० कपर्दं० भाललोचनायन० भालं० सोमसूर्याग्निलोचनाय० नेत्राणि० श्रुतिश्रोत्राय० श्रोत्राणि० घ्राणगंधाय० घ्राणानि० स्मृतिदंताय० दंतान्० श्रुतिजिह्वाय० जिह्वां० भीमाय० कपोलौ०

शर्वाय० ओष्ठौ० नीलकंठाय० कंठं० भूरिवक्षसे० वक्षांसि० हिरण्यबाहवे० बाहून्० विश्वोदराय० उदरं० रुद्राय० कटिं० पशुप
तये० जानुनी० उग्राय० गुल्फौ० महते० पादौ० शिवाय० सर्वांगं० ॥ पृथुवेण्यै० वेणीं० सीमंतराजितायै० सीमंतं० नीलकुंतलायै०
कपोलौ० कुड्मलदंतायै० दंतान्० चारुजिह्वायै० जिह्वां० बिंबोष्ठायै० ओष्ठौ० कंबुकंठायै० कंठं० पृथुलकुचायै० कुचौ० विश्व
गर्भायै० उदरं० शुभकटचै० कटिं० दिव्योरुदेशायै० ऊरू० वृत्तजंघायै० जंघे० लक्ष्मीसेवितपादुकायै० पादौ० महेश्वरप्रियायै०
नखान्० शोभनविग्रहायै० सर्वांगं०॥एवंपूजांसमाप्य॥प्रथमग्रंथिमारभ्यदोरकसर्वग्रंथिषुबिल्वदलादिभिरुमामहेश्वरौनेमंत्रयेत् ॥ प्रत्ये
कंक्रमेणसंपूज्यपंचदशग्रंथिषुगोधूमांस्तंडुलान्वानिधापयेत्॥ततोदोरकधारणम् ॥ ततोमोघृतपाचितगोधूमापूपानांवायनंमंडकानांवा
पात्रेपंचदशमंडकान्संस्थाप्यसदक्षिणवायनंदद्यात् ॥ तत्रमंत्रः ॥ उमेशःप्रतिगृह्णातिउमेशोवैददातिच ॥ उमेशस्तारकोभाभ्यामुमेशाय
नमोनमः ॥ ततःपीठंदत्त्वासदन्नेनशैवान्ब्राह्मणान्संतर्प्यवाग्यतःस्वयंभुंजीत ॥ एवंपंचदशवर्षप्रतिसंवत्सरंचरित्वाऽतेउद्यापनंकुर्यात् ॥
पूर्वोक्तफलावाप्तये आचरितोमामहेश्वरव्रतपूर्तयेतदुद्यापनंकरिष्ये ॥ ततःपंचदशशैवान्द्विजान्निमंत्र्यदेवंस्थापयेत् । वृताचार्यःलिंगतो
भद्रेपंचदशपीठेषुपंचदशकुंभान्वस्त्रयुग्मवेष्टितान्कृत्वापुराणपठनादिनारात्रिंनिनयेत्। प्रातर्ऋत्विक्सहितोमुख्याचार्यः अग्निंप्रतिष्ठाप्या
न्वादध्यात् । उमामहेशंघृताक्तपायसद्रव्येणपंचदशसहस्रंपंचदशशतानिवातत्संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्याय
क्ष्ये ॥होममंत्रः ॥ उमामहेश्वरायनमःस्वाहेति वेदोक्तोवा। ततोद्विजान्वस्त्रादिनासंपूज्यपीठंवायनानिचतेभ्योदत्त्वाव्रतपूर्तयेपंचदशगा
स्तन्मौल्यंवादत्त्वाऽन्यान्द्विजान्सुवासिनीश्चसंपूज्यदेवंप्रार्थयेत् ॥उद्यापनंकृतंशंभोमयैतदधुनाप्रभो ॥ इदंसंपूर्णतांयातुत्वत्प्रसादान्महे

श्वर ॥ मंत्रहीनंभक्तिहीनंशक्तिहीनंचयत्कृतम् ॥ सांगंभवतुतत्सर्वंतवैवस्मरणात्प्रभो ॥ ततः आशिषोगृहीत्वावाग्यतइष्टजनैःसहभुंजी
त ॥ इत्युमामहेश्वरव्रतम् ॥ अथाश्विनपूर्णिमायांकोजागरव्रतं स्कांदे॥तिथ्यादिसंकीर्त्यात्मनःस्वकुलस्य चाखंडलक्ष्मीप्राप्तिपूर्वकसुखा
दिप्राप्तयेलक्ष्मीप्रीत्यर्थंकोजागरव्रतंकरिष्ये ॥ रात्रौमंडलेसक्तुमिवतितउनेतिमंत्रेणलक्ष्मीं० इदंनरोनेतिमंत्रेणमत्तैरावतस्थमिंद्रमा
वाह्यसंपूजयेत् ॥ परितोदीपान्घृतेनतैलेनवालक्षंतदर्द्धंतदर्द्धंवायथाशक्तिवादत्त्वावीथीचतुष्पथेवादत्त्वानालिकेरोदकमात्रंप्राश्याक्षैर्दी
व्यन्नुत्सवेनरात्रिंनिनयेत् । प्रातर्घृतशर्करापायसादिनाब्राह्मणान्संतर्प्यदक्षिणांदत्त्वाऽऽशिषोगृहीत्वेष्टजनैःसहभुंजीत ॥ इतिकोजागरव्र
तम् ॥ अथकार्तिकशुक्लचतुर्दश्यांपौर्णमास्यांवाकूष्मांडीव्रतंभविष्ये ॥ अन्यस्मिन्शुभमासेवाकार्यम् ॥ तत्रव्रतविधिः ॥ वैशाखसितच
तुर्दश्यांशुभदेशेकुष्मांडीरोपणंषण्मासावधिषण्णाममंत्रैःप्रत्यहंक्रमात्पूजयेत्॥सौभाग्यदायिन्यै० १ सर्वकामदायै० २ पुत्रदायै० ३ धन
दायै० ४ अभीष्टफलदायै० ५ मोक्षदायै० ६ एवंषण्मासंसंपूज्यफलादियुतायांसत्यामुद्यापनंकुर्यात्॥उद्यापनदिनेवाक्रमात् षण्मासिका
पूजाआदौकार्या ॥ तिथ्यादिसंकीर्त्यात्मनः सत्पुत्रप्राप्तिपूर्वकातुललक्ष्मीसुखाभिवृद्धिद्वाराब्रह्मसावित्रीप्रीत्यर्थंकूष्मांडीव्रतोद्यापनंकरि
ष्ये ॥ ततोवृताचार्यः कुष्मांडीपरितोमंडपंविरच्यपताकादिभिर्भूषयित्वातन्मूलेहैमींपुष्पफलादियुतांकूष्मांडीसंस्थाप्याऽभ्यंगस्ना
नंकृत्वाभूषणैर्भूषयित्वापूजयेत् । तत्पुरतः सर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्यतत्रहैमप्रतिमेब्रह्मसावित्र्योर्ब्रह्मजज्ञानं
प्रणोदेवीतिमंत्राभ्यांप्रतिष्ठाप्यपूजयेत् ॥ कूष्मांडीपूजनमंत्रः ॥ कूष्मांडचैकामदायिन्यैब्रह्माण्यैतेनमोनमः ॥ नमोस्तुसुखदात्र्यैच
सावित्र्यैतेनमोनमः ॥ रात्रौजागरणंकृत्वाप्रातरग्निंप्रतिष्ठाप्याऽन्वादध्यात् ॥ ब्रह्माणंसावित्रींचघृततिलद्रव्येणप्रत्येकमष्टोत्तरशतसंख्या

काहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ स्थापनमंत्राभ्यांहोमः ॥ ततोऽष्टौचत्वारिवामिथुनानिवस्त्रादिनासंपूज्यफलसौ
भाग्यद्रव्ययुतंवायनंतेभ्योदत्त्वासपत्नीकंब्राह्मणंसंपूज्यतस्मैकूष्मांडींदद्यात् ॥ तत्रमंत्रः ॥ कूष्मांडींबहुबीजाढ्यांवस्त्रालंकारभूषिता
म् ॥ दक्षिणाकलशोपेतांहैमकूष्मांडिसंयुताम् ॥ सावित्रीब्रह्मसंप्रीत्यैगृहाणाद्विजसत्तम ॥ ततःपीठंव्रतपूर्तयेगांचदत्त्वाब्राह्मणान्संत
र्पयेदिति ॥ इतिकूष्मांडीव्रतम् ॥ अथकार्तिकपूर्णिमायांसौभाग्यव्रतम् ॥ विष्णुधर्मोत्तरे ॥ विधिवन्नद्यादौस्नात्वानित्यकर्म
निर्वर्त्यततस्तिथ्यादिसंकीर्त्यममेहजन्मनिअखंडितसुखसौभाग्यधनधान्यलक्ष्मीभर्तृपुत्रायुर्वृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसौभाग्यव्रतंक
रिष्ये ।भूमौकेशरादिसुगंधद्रव्ययुतगंधेनषोडशपत्रात्मकंपद्मंविरच्यतत्रदेवताआवाहयेत् ॥ मध्येलक्ष्मीनारायणंकेसरेसप्तविंशतिन
क्षत्राणिपूर्वादिक्रमपत्रेषु अग्निं० ब्रह्माणम्० अंबिकां० गणपतिं० नागं० स्कंदं० विरोचनं० शिवं० दुर्गां० यमम्० इंद्रं०
विष्णुं० कामेशं शिवम्० इंदुं० पितरंच १६ सप्तर्षीन्एताःदेवताःसंस्थाप्यसंपूज्य मोदकं मंडकं पायसंदध्नाऽपूपैश्चदिनेनैवेद्यं
दत्त्वाविविधफलानिदत्त्वापूजांतेब्राह्मणायवस्त्रयुग्मंदद्यात् सदन्नेनब्राह्मणान्भोजयेद्दक्षिणांदद्यात्स्वयमुपवासीनक्तंभोजनंवाकार्यम् ॥
सौभाग्यदंरूपविवर्द्धनंचलावण्यदंस्त्रीरतिभोगदंच ॥ कार्यंप्रयत्नेननरेंद्रपुंसाकार्यंतथास्त्रीभिरदीनसत्वम् ॥ इतिसौभाग्यवृद्धिकरव्रत
म् ॥ अथमहाफलव्रतम् ॥ कार्तिकशुक्लप्रतिपदमारभ्यपूर्णिमापर्यंतमथवावैशाखतृतीयायामाश्विनशुक्लेवारभेत ॥ दंतधावनपूर्वं
कंदशस्नानविधिपुरःसरंनद्यादौस्नात्वापंचगव्यंप्राश्यतिथ्यादिसंकीर्त्यात्मनोऽखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसि
द्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंमहाफलव्रतंकरिष्ये ॥ विष्णुंविधिपुरःसरंसंपूज्यद्वादशाक्षरमंत्रमष्टोत्तरसहस्रंजप्त्वानिनयेत् ॥ प्रतिपदि

क्षीराशनः सप्तम्यामष्टम्यांनवम्यांपिष्टाशी दशम्यांहविष्याशी एकादश्यामुपवासः द्वादश्यांघृताशी पयोहारःत्रयोदश्यां पौर्णमा
स्यांकुशोदकप्राशनम् ॥ एवंप्राशनविधिः ॥ अनेनविधिनापक्षमेकंयोवर्ततेयति अश्वमेधफलंप्राप्नोति ॥ मासपर्यन्तं मन्वं
तरंयावत्स्वर्गेवसति ॥ चतुष्टयेतु राजसूयानांशतगुणफलमाप्नोति । संवत्सरमाचरेदितिसवितुर्लोकेऽनंतकालंप्रतिवसति ।
यतीब्रह्मचारीगृहस्थोवानप्रस्थोनारीसौभाग्यवतीविधवानरोवाशुचिःप्रयतमानसःपुष्पदंतविभुसात्कोटचंत्रजातिपुष्पदंतविभुःसूर्यः ॥
इतिभविष्यपुराणोक्तंमहाफलव्रतम् ॥ अशोकपूर्णिमाव्रतंविष्णुधर्मोक्तम् ॥ फाल्गुनीशुक्लपूर्णिमामारभ्यतिथ्याद्युल्लिख्यन
द्यादौविधिवत्स्नात्वानित्यकर्मनिर्वर्त्यममेहजन्मनिअखिलशोकापच्छांतिपूर्वकसकलबाधानिवृत्तिकरैश्वर्याखंडितसौभाग्यपुत्रपौत्राद्य
भिवृद्ध्यर्थमशोकपूर्णिमाव्रतंकरिष्ये ॥ स्नात्वाशिरसिमृद्धृत्वापुनःस्नात्वाभूमौमृत्स्थंडिलंविरच्यमध्येभूमिरूपांधरणींध्यात्वापूज
येत्प्रार्थयेच्च ॥ यथाविशोकंधरणीकृत्तवास्तिजनार्दनः ॥ तथामांसर्वलोकेभ्योमोचयेच्छोकधारिणि ॥ यथासमस्तभूता
नामाधारण्येव्यवस्थिता ॥ तथाविशोकंकुरुमांसकलेच्छाधिभूतिभिः ॥ ध्यानमात्रेयथाविष्णोःस्वास्थ्यंप्राप्नोतिमेदिनी ॥ त
थामनःस्वस्थितंमेकुरुत्वंभूतधारिणि ॥ ततश्चन्द्रायार्घ्यंदद्यात् क्षीरोदार्णवेति० ॥ उपोषितंनक्तंवाहविष्याशी प्रातःपारणंद्वि
जदंपतीसदन्नेनसंतर्प्यवायनदक्षिणांचदद्यात् ॥ एवंप्रकारेणफाल्गुनादिमासचतुष्टयंकारयेत् ॥ पुनःआषाढमासचतुष्टयंपूर्ववत्स्नान
पूजांप्राशनंकुर्यात् रात्रौजागरणादिकंचपुनस्तथैव कार्तिकादिमासचतुष्टयं ॥ प्रथमंधरणीद्वितीयंमेदिनी ततस्तृतीयंवसुन्धरा वत्सरां
तेद्विजंसवत्सांगांसर्वालंकारयुतांदद्यात् ॥ व्रतेनानेनकल्याणित्वयाऽहंपरितोषितः ॥ तस्मात्प्रसादमतुलंकरोतितवसुव्रते ॥ यथै

वकुरुतेभक्त्याप्रजामेवसुधेनमः ॥ सर्वबाधाविनिर्मुक्तोदशजन्मान्तराण्यसौ ॥ विशोकाःसर्वकल्याणंजनःस्यात्तुनसंशयः ॥ इतिअ
शोकपूर्णिमाव्रतम् ॥ अथद्वादशपूर्णिमाव्रतंविष्णुधर्मे ॥ नियमपूर्वकंस्नात्वातिथ्यादिसंकीर्त्यममेहजन्मनिजन्मान्तरेवाभर्त्रासहचतु
र्विधपुरुषार्थधर्मार्थकाममोक्षप्राप्तिद्वाराश्रीविष्णुप्रीत्यर्थंद्वादशपूर्णिमाव्रतंकरिष्ये ॥ कृतोपवासः ॥ मध्याह्नेऽपराह्णेविष्णुंविभवानुसारेण
संपूज्यचंद्रायार्घ्यंदत्त्वाद्वादशाक्षरमंत्रंजप्त्वाप्रार्थयेत् ॥ श्रीनिशाबंधुरूपस्त्वंवासुदेवजगत्पते ॥ मनोभिलषितंदेवपूरयस्वनमोनमः॥ततो
ब्राह्मणायउदकुंभंवस्त्रद्वयमुपानच्छत्रेदक्षिणासहितेदद्यात्।रात्रिंजागरणादिभिर्निनयेत्॥प्रातःसदन्नेनब्राह्मणैःसहभुंजीत।एवंप्रकारांतरेण
प्रतिमासंकुर्यात्॥ पृथक्पृथक् मासनामानि॥ केशव० नारायण० माधव० गोविन्द०विष्णो० मधुसूदन० त्रिविक्रम० वामन० श्रीधर०
हृषीकेश० पद्मनाभ० दामोदर० एवंद्वादशक्रमेणपूजयेत् ॥ संवत्सरस्यांतेहिरण्मयंचंद्रंकृत्वापूजयेत् ॥ फलवस्त्रसहितंब्राह्मणायद
त्त्वाव्रतपूर्तयेशुक्लांगांदक्षिणासहितांदद्यात् । सदन्नेनविप्रदंपतिभ्यांसहभुंजीत ॥ इतिद्वादशपूर्णिमाव्रतम् ॥ इतिश्रीचित्तपा०व्रतोद्याप
नकौमुद्यांपूर्णिमाव्रतानि ॥ अथामावास्याव्रतानि ॥ अथमार्गशीर्षाऽमावास्यायांगौरीतपोव्रतं कालिकापुराणे ॥ तत्रविधिः ॥ इदंव्रतं
षोडशवर्षात्मकमशक्तौषोडशमासात्मकम् । तत्रप्रथमेऽब्देचतुर्दश्यांनक्तममायामुपोषणंपूजनंचप्रतिपदिपारणा ॥ अत्रवर्षवृद्धौतिथि
वृद्धिः ॥ पूर्वांत्यक्त्वाद्वितीयामाचरेत् ॥ प्रदर्शनार्थंलिख्यते ॥ द्वितीयेऽब्देअमावास्यायांनक्तं प्रतिपदिउपोषणं द्वितीयायांपारणम् ॥
एवंसर्वत्रज्ञेयम् ॥ तिथ्यादिसंकीर्त्यात्मनःपतिपुत्रसुखावाप्तिपूर्वकाऽतुलसौभाग्यादिवृद्धिद्वारागौरीप्रीत्यर्थंगौरीतपोव्रतंकरिष्यइतिसं
कल्प्य सूर्यायार्घ्यंदत्त्वा पूजासामग्रीमादायरात्रौशिवालयेगृहेवापीठे नमोदेव्याइतिमंत्रेणगौरीमावाह्यदक्षिणोत्तरतः गणेशंस्कंदंचा

वाह्यपंचामृतपुरःसरंषोडशोपचारैःपूजयेत् ॥ अंगपूजा ॥ पार्वत्यैनमः पादौपू० हैमवत्यै० जानुनी० गिरिजायै० गुह्यं० गंभीरायै० नाभिं० अपर्णायै० उदरं० कामिन्यै० कंठं० स्कंदमात्रे० मुखं० लोकमोहिन्यै० ललाटं० गौर्यैन० शिरःपू० ततस्ताम्रपात्रेऽष्टदलेतंतुमयींवर्त्तिंनिधायगोघृतेनदीपमुज्ज्वालयेत्सूर्योदयावधि ॥ एवंकथाश्रवणादिनारात्रिंनीत्वाब्राह्मेमुहूर्तेउत्थायस्नात्वागौरींसंपूज्यफलपूरिकातिलतंडुलसौभाग्याष्टकयुतधातुमयेपात्रेदीपंनिधायतिथिनामभिर्भ्रामयेत्ततःसूर्यायदर्शयेत् ॥ यावत्पक्ष्यादीनांशब्दादिकंनास्तितावत्पूर्वमेवदीपभ्रमणादिकंकर्तव्यम् ॥ ततःप्रातःदंपतीसंभोज्यगौरींविसृज्यस्वयमक्षारंभुंजीत ॥ वर्षवृद्धौदंपतिवृद्धिः ॥ एवंषोडशवर्षंकृत्वांतेउद्यापनंकुर्यात् ॥ मार्गशीर्षपौर्णमास्यांपूर्ववत्संकल्पंकृत्वा ततोवृताचार्यःपीठेहैमींगौरीं गौरीर्मिमायेतिमंत्रेणईश्वरंच येषामीशेपशुपतिरितिमंत्रेण आवाह्यपूर्ववत्सर्वंकुर्यात् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ गौरीमीश्वरंच घृततिलद्रव्येणप्रत्येकमष्टोत्तरसहस्रसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये । ततःषोडशदंपतीन्वस्त्रादिनासंपूज्य शर्करापूपमोदकपूरितान्धातुमयान्मृन्मयान्वा करकान्सदक्षिणांस्तेभ्योदद्यात् ॥ तत्रमंत्रः ॥ मोदकाद्यैश्चसंपूर्णंव्रतसंपूर्तिकारकम् ॥ करकंतेप्रयच्छामिगौरीमेप्रीयतामिति ॥ ततःपीठंव्रतपूर्तयेगांचदत्त्वाऽऽशिषोगृहीत्वाभुंजीत ॥ इतिगौरीतपोव्रतम् ॥ अथपौषमाघामावास्यायामर्धोदयव्रतं स्कांदे ॥ अर्धोदयस्वरूपंभारते ॥ “ अमार्कश्रवणेपातेयुक्ताचेत्पौषमाघयोः ॥ अर्धोदयःसविज्ञेयःकोटिसूर्यग्रहैःसमः ॥ ” इति । “ दिवैवयोगःशस्तोयंनतुरात्रौकदाचन ” इति । तिथ्यादिसंकीर्त्यात्मनोऽखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराब्रह्मविष्णुशिवप्रीत्यर्थमर्धोदयव्रतंकरिष्ये इतिसंकल्प्य दर्भास्तृतशुद्धभूमौशतत्रयद्रोणपरिमिततिलानांपर्वतंकृत्वायथाश

त्किवातत्रपलाधिकंसुवर्णस्यब्रह्मविष्णुशिवानांप्रतिमात्रयंकृत्वाब्रह्मजज्ञानमिदंविष्णुस्त्र्यंबकमितिमंत्रैःप्रतिष्ठाप्यपूजयेत् ॥ परितोलो केशांस्तत्तन्मंत्रैरावाहयेत्पूजयेच्च ॥ अथांगपूजा ॥ क्रमेण ब्रह्मणे० पादौपू० हिरण्यगर्भाय० ऊरू० परमेष्ठिने० जंघे० वेधसे० गुह्यं० हंसवाहनाय० कटिं० शतानंदा० वक्षःपू० सावित्रीपतये० बाहू० ॥ पूर्वादिचतुर्मुखेषु ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० चतुर्वक्त्राय० नेत्रे० कपिलाय० ललाटं०हंसाय० शिरःपू० ॥ अथविष्णोः ॥ अनंताय० पादौ० विश्वरूपाय० ऊरू० मुकुंदाय० जानुनी० गोविंदाय० जंघे० प्रद्युम्नाय० गुह्यं० पद्मनाभाय० नाभिं० कौस्तुभवक्षसेन० वक्ष० चतुर्भुजाय० बाहू० विश्वतोमुखाय० मुखं० सहस्रशिरसे० शिरः० ॥ अथशिवस्य ॥ ईशानाय० पादौ० चंद्रशेखराय० जंघे० पशुपतये० जानुनी० शंकराय ऊरू० उमाकांताय० गुह्यं० नीललोहिताय० नाभिं० कृत्तिवाससे० उदरं० नागोपवीतिने० बाहू० नीलकंठाय० कंठं० पंचवक्त्राय० मुखं० कपर्दिने० शिरः० ॥ क्रमेणप्रार्थयेत् ॥ नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने ॥ देवायदेवपतयेयज्ञानांपतयेनमः ॥ नारायणजगन्नाथनमस्तेगरुडध्वज ॥ पीतांबरनमस्तुभ्यंजनार्दननमोस्तुते ॥ महेश्वरमहेशाननमस्तेत्रिपुरांतक ॥ जीमूतकेशायनमोनमस्तेवृषभध्वज ॥ ब्रह्मविष्णुमहेशानाःकर्मणांफलहेतवः ॥ भक्त्यामयाकृतांपूजांगृह्णीध्वंजगदीश्वराः ॥ ततःसपत्नीकंवेदशास्त्रविदंब्राह्मणंवृत्वावस्त्रालंकरणादिभिःसंपूज्य पुनःब्रह्मविष्णुमहेशान्पंचामृतपुरःसरंकमलतुलसीबिल्वदलैःसंपूजयेत्॥ततोवृताचार्यः॥अग्निप्रतिष्ठाप्यान्वादध्यात् ॥ ब्रह्मविष्णुमहेशान् घृताक्ततिलद्रव्येण ॥ प्रतिदैवतंसहस्रसंख्याकाहुतिभिः लोकपालानेकैकयाज्याहुत्या यक्ष्ये ॥ ततस्तिलपर्वतंप्रतिमात्रययुतंब्राह्मणायदद्यात् ॥ तत्रमंत्रः ॥ तिलपर्वतमध्यस्थाब्रह्मविष्णुमहेश्वराः ॥ दहंतुपातकंसर्वंयच्छं

 

तुममसद्गतिम् ॥ इति उक्त्वादद्यात् ॥ ततःसांगतासिद्ध्यर्थंरक्तकृष्णश्वेतवर्णसुरभित्रयंसोपस्करंदद्यात् ॥ भविष्येप्रकारांतरेणहो
मद्रव्याण्युक्तानिपलाशसमिच्चरुतिलाज्यानि ब्रह्मणः । अश्वत्थसमित्तिलपायसानि विष्णोः । चर्वाज्यव्रीहयःशंभोः ॥ घृतेनपायसे
नवापूरितंकांस्यपात्रंसदक्षिणंदद्यात् । ततोभूयसींदत्त्वा आशिषोगृहीत्वाब्राह्मणैः सहभुंजीत ॥ इतिअर्धोदयव्रतम् ॥ अथसो
मवत्यमावास्याव्रतम् ॥ भविष्ये ॥ तत्रशंखः " अमावास्यातुसोमेनसप्तमीभानुनासह ॥ चतुर्थीभूमिपुत्रेणसोमपुत्रेणचाष्टमी ॥ च
तस्रस्तिथयस्त्वेताःसूर्यग्रहणसन्निभाः ॥ " इति ॥ तिथ्यादिसंकीर्त्यात्मनोऽवैधव्यपुत्रपौत्रप्राप्तिपूर्वकातुलसौभाग्यसिद्धिद्वाराश्वत्थ
रूपिनारायणप्रीत्यर्थमाचरितस्यसोमवत्यमावास्याव्रतस्यसांगतासिद्ध्येतदुद्यापनाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्य वृताचार्यःसर्वतो
भद्रस्थकलशेरौप्यमयपीठस्थसौवर्णाश्वत्थाधोहैमंलक्ष्मीनारायणमिदंविष्णुरितिमंत्रेणप्रतिष्ठाप्यपूजयेत् ॥ मूलतोब्रह्मरूपायेतिपुरुष
सूक्तेनवापूजयेत् । कथाश्रवणादिनारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादद्यात् ॥ लक्ष्मीनारायणमश्वत्थसमित्पायसतिलद्रव्येण
प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततोद्वादशब्राह्मणान्वस्त्रादिनासंपूज्यलड्डुकपायसघृत
मंडकादिपक्वान्नैःसंतर्प्याशिषोगृही त्वास्वयंभुंजीत ॥ इतिसोमवत्यमावास्याव्रतम् ॥ अथमलमासव्रतंपाद्मे ॥ मलमासस्यकृष्णप
क्षेचतुर्दश्यांत्रयोदश्यांवाअष्टम्यांनवम्यांतृतीयायांवाऽन्यतमतिथौकार्यम् ॥ तिथ्यादिसंकीर्त्यात्मनोदारिद्र्यपापदुःखनाशसत्पुत्रप्राप्तिपू
र्वकाऽतुलभोगसिद्धिद्वारासवितृरूपिपरमेश्वरप्रीत्यर्थंमलमासव्रतंकरिष्ये ॥ इतिसंकल्प्य मध्याह्नेसर्वतोभद्रस्थकलशेहैमंलक्ष्मीयुतंज
नार्दनंसंपूज्य ॥ नानाविधपक्वान्ननैवेद्यंदत्त्वाफलपुष्पोपेतमर्घ्यंदद्यात् ॥ तत्रमंत्रः ॥ देवदेवजगन्नाथप्रलयोत्पत्तिकारक ॥ गृहाणा

र्घ्यंमयादत्तंकृपांकुरुममोपरि ॥ ततःसपत्नीकंब्राह्मणंवस्त्रादिनासंपूज्यत्रयस्त्रिंशदपूपान्कांस्यपात्रेनिधायसघृतंसहिरण्यंवायनंब्राह्मणाय निवेदयेत् ॥ तत्रमंत्रः ॥ विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने ॥ नरकोत्तारणार्थायअच्युतःप्रीयतामिति ॥ इतिदत्त्वा छत्रोपानद्भूषणा च्छादनादियुतांशय्यांचदत्त्वापीठंव्रतपूर्तयेगांचदत्त्वानानाविधपक्वान्नैर्ब्राह्मणान्संतर्प्यांशिषोगृहीत्वास्वयंभुंजीत॥इतिमलमासव्रतम्॥ अथश्रावणाऽमायांपिठोराव्रतंस्कांदे ॥ प्रातःस्नानादिनिर्वर्त्यवार्षिकवत्पूजांकुर्यात् ॥ उद्यापनसंकल्पंकुर्यात् ॥ तिथ्यादिसंकीर्त्या त्मनःस्वकुलस्यचसंततिविच्छेदाभावपूर्वकपुत्रपौत्रलक्ष्मीसुखाद्यभिवृद्धयेसप्तवर्षावध्याचरितपिठोराव्रतस्यसंपूर्णतासिद्ध्यर्थंचतुःषष्टि योगिनीस्वरूपसप्तमातृकाप्रीत्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये ॥ वृताचार्यः उक्तप्रकारेणसर्वतोभद्रेऽष्टौकलशान्प्रतिष्ठाप्य सप्तकल शेषुक्रमेणहैमीः सप्तप्रतिमाः नाममंत्रेण ब्राह्मीं० माहेश्वरीं० कौमारीं० वैष्णवीं० वाराहीं० इंद्राणीं० चामुंडां० आवाह्यजज्ञानंसप्त मातरःइत्यनेनपूजयेत्॥तदुत्तरेसुवर्णादिपूर्णपात्रयुतेकलशेचतुःषष्टियोगिनीः हैमप्रतिमासुअक्षतपुंजेषुवाआवाहयेत् ॥ दिव्ययोगिनीं० १ महायोगिनीं० २ सिद्धयोगिनीं० ३ गणेश्वरीं० ४ प्रेताक्षीं० ५ डाकिनीं० ६ कालीं० ७ कालरात्रिं० ८ निशाचरीं० ९ ॐका रीं० १० रुद्रवेतालीं० ११ ह्रींकारीं० १२ भूतडांबरीं० १३ ऊर्ध्वकेशीं० १४ विरूपाक्षीं० १५ शुष्कांगीं० १६ नरभोजनां० १७ भण्डीं० १८ वीरभद्रां० १९ धूम्राक्षीं० २० कलहप्रियां० २१ राक्षसीं० २२ घोररक्ताक्षीं० २३ विरूपां० २४ भयंकरीं० २५ भासुरीं० २६ रौद्रवेतालीं० २७ श्रीपर्णीं० २८ त्रिपुरांतकां० २९ भैरवीं० ३० ध्वंसिनीं० ३१ क्रोधिनीं० ३२ दुर्मुखीं० ३३ प्रे तवाहिनीं० ३४ कंटकीं० ३५ त्राटकीं० ३६ यमदूतीं० ३७ करालीं० ३८ खट्वांगीं० ३९ दीर्घलंबोष्ठीं० ४० मालिनीं० ४१

मंत्रयोगिनीं० ४२ कालाग्निगृहिणीं० ४३ चक्रीं० ४४ कंकालीं० ४५ भुवनेश्वरीं० ४६ स्फाराक्षीं० ४७ कार्मुकीं० ४८ लौकिकीं० ४९ काकदंष्ट्रिं० ५० अधोमुखीं० ५१ भक्षणीं० ५२ प्रेरणीं० ५३ व्याघ्रीं० ५४ कंकणीं० ५५ प्रेतभक्षणीं० ५६ वीरकौमारिकां० ५७ चंडां० ५८ वाराहीं० ५९ मुंडधारिणीं० ६ कामाक्षीं० ६१ उड्डाणीं० ६२ जालंधरां० ६३ महालक्ष्मीं० ६४ ॥ ततःसुवर्णपात्रेणफलपुष्पयुतमर्घ्यंनाममंत्रेणप्रत्येकंदद्याद्रात्रिंचनिनयेत्॥प्रातःपीठंदेवताःसंपूज्याऽग्निंप्रतिष्ठाप्यान्वादद्यात्॥सप्तमातृःअष्टोत्तरशतमाज्याहुत्यायोगिनीश्चैकैकयाज्याहुत्याब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ पूजामंत्रेणहोमः॥ होमस्तुकृताकृतः ततःसप्तमिथुनानिवस्त्रादिनासंपूज्यवस्त्रदक्षिणाप्रतिमायुतान्सप्तकलशांस्तेभ्योदद्यात्॥तत्रमंत्रः॥सोपस्करंचकलशंगृहाणद्विजसत्तम ॥ प्रीयंतांमातरोमह्यंलोकानांस्थितिहेतवः ॥ ततोयोगिनीपीठमाचार्यायदत्त्वाव्रतपूर्तये अष्टौगास्तेभ्योदत्त्वासदन्नेनसंतर्प्याशिषोगृहीत्वा स्वयंभुंजीत॥ इतिपिठोरीव्रतम् ॥ इतिश्रीमच्चित्त० व्रतोद्यापनकौमुद्यांतिथिव्रतानिसमाप्तानि ॥ ॥ अथचातुर्मास्यव्रतारंभः॥ तत्रस्वस्तिकव्रतं भविष्ये ॥ तत्तुआषाढादिआश्विनांतम् ॥ तत्रविधिः ॥ देवालयेगोष्ठेतुलस्यालयेगृहेवागोमयोपलिप्तशुद्धभूमौपंचरंगैर्वर्णैः प्रत्यहंसहस्रंस्वस्तिकानिलिखित्वातत्रगोपालंसंपूजयेत् ॥ एवंचरित्वांतेउद्यापनंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यआत्मनः शत्रुजयपापक्षयवैधव्यादिनिरसनपूर्वकपुत्रपौत्रसौभाग्यारोग्यावाप्तिद्वारा आचरितस्यस्वस्तिकव्रतस्यपूर्णतासिद्ध्येगोपालप्रीत्यर्थंतदुद्यापनंकरिष्ये ॥ ततोवृताचार्यःसर्वतोभद्रस्थकलशेहैमंगोपालमिदंविष्णुरितिमंत्रेणसंस्थाप्यपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ गोपालं स्वतिकदशांशेनशतांशेनवाघृताक्तपायसद्रव्येणब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ होममंत्रः ॥ स्वस्त्ययनंतार्क्ष्यमरि

ष्टनेमिमिति । पौराणमंत्रस्तु । स्वस्तिनापरमंदैवंस्वस्तिकरणकारणात् ॥ स्वस्तयेपापसंयच्छसंयुक्तंममाग्नयेस्वाहेति । होमदशांशे नतर्पणंहोममंत्रेण तद्दशांशेनब्राह्मणभोजनम् । ततोविशिष्टान्दशब्राह्मणान्वस्त्रादिनासंपूज्यतेभ्यः पंचरंगयुतान्यौर्णान्यभावेदर्भजान्य प्यासनानिदक्षिणापुरःसुरंदत्त्वासोपस्करमाचार्यायदत्त्वाव्रतपूर्तयेगोमिथुनंचदत्त्वा अधिकफलावाप्तयेयवानांद्रोणं तदभावे आढकीनां द्रोणंदत्त्वापक्वान्नैर्ब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत॥इतिस्वस्तिकव्रतम् ॥ अथ श्रावणांत्यभृगुवासरे वरदलक्ष्मीव्रतंभ विष्ये ॥ तिथ्यादिसंकीर्त्यात्मनः अतुलसौभाग्यपुत्रपौत्रादिप्राप्तिपूर्वकाधिकलक्ष्मीप्राप्तयेवरदलक्ष्मीव्रतंकरिष्ये ॥ शुद्धभूमौचतुर्द्वारो पशोभितमंडपेपंचरंगैःशोभितवेदिकायांप्रस्थतंडुलस्थकलशोपरिहैमींलक्ष्मीप्रतिमांसक्तुमिवतितोतिमंत्रेण आवाह्यश्रीसूक्तेनपूजयेत्॥ तत्पुरतएकविंशतितंतुमितंहरिद्रारंजितंदोरकंपूजयेत् ॥ अथांगपूजा ॥ वरदलक्ष्म्यै० पादौ० कमलवासिन्यै० गुल्फौ० पद्मालयायै० जंघे० श्रियै० जानुनी० इंद्राण्यै० ऊरू० हरिप्रियायै० कटी० लोकधात्र्यै० नाभिं० शंखनिध्यै० हस्तौ० त्रैलोक्यपावन्यै० कंठं० मायायै० मुखं० धात्र्यै० बाहू० पद्मनिध्यै० नयने० भार्गव्यै० कर्णौ० क्षीरसागरजायै० ललाटं० वरदलक्ष्म्यै० शिरःपू० महाल क्ष्म्यै० सर्वांगं० ॥ ततोऽश्वत्थबिल्वचूतदाडिममालतीनांप्रत्येकमेकविंशतिपत्रैर्वरदलक्ष्म्यैनमइत्यनेनपूजयेत् ॥ एकविंशत्यपूपपाय सनैवेद्यं पुनरर्घ्यम् ॥ क्षीरार्णवसुतेलक्ष्मि चंद्रस्यैवसहोदरि ॥ गृहाणार्घ्यंमहालक्ष्मिदेवितुभ्यंनमोनमः ॥ ततोदोरकग्रहणम् । सर्वमंगल मांगल्येसर्वपापप्रणाशिनि ॥ दोरकंप्रतिगृह्णामिसुप्रीताभवमेशुभे ॥ ततःकंठेदोरकबंधनम् ॥ करिष्यामिव्रतंदेवित्वद्भक्तस्त्वत्परायणः ॥ श्रियंदेहियशोदेहिसौभाग्यंदेहिमेशुभे ॥ ततःप्रार्थयेत् ॥ प्रयच्छपुत्रपौत्रांश्चविष्णुवक्षस्थलेऽनघे ॥ श्रियंदेहियशोदेहिसर्वान्कामां

श्वदेहिमे ॥ ततोवायनपंचकंदद्यात्क्रमेण ॥ विप्राययतयेदेव्यैब्रह्मचारिणेसुवासिन्यैच ॥ तत्रमंत्रः ॥ एकविंशतिपक्वान्नशर्करा
घृतसंयुतम् ॥ वायनंतेप्रयच्छामिइंदिराप्रीयतामिति ॥ ततःक्षमाप्य ब्राह्मणसुवासिनीःसदन्नेनसंतर्प्यशक्तौसत्यां गांचदत्त्वामौ
नेनभुंजीत ॥ इतिवरदलक्ष्मीव्रतम् ॥ अत्रव्रतेनानेनदेवीतुष्टानवातत्रपरीक्षा । नागवल्लीदलंत्वेकंक्रमुकंचूर्णवर्जितम् ॥
भक्षयित्वातुचैलांतेबद्ध्वाप्रातर्निरीक्षयेत् ॥ आरक्तेसतिसुप्रीतादेवीज्ञेयाविचक्षणैः ॥ अन्यथातद्व्रतंकुर्यात्सर्वथाभूतिमिच्छता ॥
अथाश्विनशुक्लपक्षांत्यभानुवासरमारभ्यमाघशुक्लसप्तम्यवधिदानफलव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्यआत्मनःसत्पुत्रप्राप्तिपूर्वकसुखा
रोग्यतासिद्धिद्वारासवितृप्रीत्यर्थंदानफलव्रतंकरिष्येतदंगंसवितृपूजनंकरिष्ये ॥ इतिसंकल्प्य गोमयोपलिप्तशुद्धभूमौताम्रपीठे
सवितारमावाह्यपूजयेत् ॥ तत्रध्यानम् ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुंडल
वान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ जगन्नाथायनमः आवाहनं० पद्मासनाय० आसनं० ग्रहपतये० पाद्यं० तमोहर्त्रे० अ
र्घ्यं० मित्राय० आचमनीयं० आदित्याय० स्नानं० जगत्पतये० वस्त्रं० त्रिमूर्तये० उपवीतं० हरये० गंधं० सूर्याय० अक्षतान्०
भास्कराय० पुष्पं० अहर्पतये० धूपं० अज्ञाननाशिने० दीपं० लोकेशाय० नैवेद्यं० विश्वतेजसे० तांबूलं० सूराय० दक्षिणां० अ
र्यम्णेनमः नीराजनं० भास्कराय० मंत्रपुष्पं० पूष्णेन० प्रदक्षिणां० सर्वात्मने० नमस्कारंस० ॥ ततोद्वादशार्घ्याणिताम्रादिपा
त्रेजलाक्षतपुष्पादिप्रक्षिप्यदद्यात् ॥ दिवाकरनमस्तुभ्यंपापंनाशयभास्कर ॥ त्रयीमयार्कविश्वात्मन्गृहाणार्घ्यंनमोस्तुते ॥ ततो
ब्राह्मणंसंपूज्यदेवींविसर्जयेत् ॥ स्वयंतैलाम्लवणबहुबीजफलादिवर्ज्यंभोजनंकुर्यात् ॥ कंदमूलफलाहारेणविशेषफलम् ॥ एवंप्र

तिभानुवासरंमाघशुक्लसप्तम्यवधिकर्तव्यम् ॥ ततउद्यापनम् ॥ तत्रषष्ठ्यामुपोष्यप्रातःस्नात्वापूर्वसंकल्पमुक्त्वासंपूर्णतासिद्धयेतदु
द्यापनंकरिष्ये ॥ इतिसंकल्प्य ततोवृताचार्योमध्याह्नेसर्वतोभद्रस्थकलशेहैमंरौप्यरथस्थसूर्यमाकृष्णेनेतिमंत्रेणसंस्थाप्यपूर्वव
त्पूजयेत् ॥ ततोऽग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ सवितारं घृताक्तपायसद्रव्येणसहस्रमष्टोत्तरशतंवा तत्संख्याकाहुतिभिः ब्रह्मादिदे
वताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ ततःपायसपूरितकांस्यपात्रपीठंव्रतपूर्तयेगांच आचार्यायदत्त्वापरमान्नेनद्वादशब्राह्मणान्संतर्पयेत् ॥
एवंकुर्यात्पंचवर्षंपंचधान्यंततोर्पयेत्॥ पंचप्रस्थप्रमाणंचसफलंदक्षिणान्वितम् ॥ क्रमेणपंचवर्षेषु व्रीहयः १ गोधूमाः २ लवणं ३ तिलाः
४ माषाः ५ एवंकृतेसकलमनोरथावाप्तिर्भवति ॥ इतिदानफलव्रतम् ॥ अथधारणापारणव्रतंभविष्ये ॥ चातुर्मास्यैकादशीमारभ्यमास
चतुष्टयंमासंवाकार्यम् ॥ तिथ्यादिसंकीर्त्यआत्मनोबंधुवधादिजनितपापक्षयपूर्वकोत्तमलोकप्राप्त्यर्थंधारणापारणव्रतंकरिष्ये ॥ गणेशंसं
पूज्य विष्णुपीठेअष्टाक्षरमंत्रेणषोडशोपचारैःसंपूज्य एकादश्यामुपवसेत् ॥ ततःप्रातःस्नात्वादेवंसंपूज्य अष्टाक्षरमनुमष्टोत्तरशतंजप्त्वा
तेनैवाऽष्टोत्तरशतमर्घ्यंदत्त्वाब्राह्मणभोजनपुरःसरंमौनीस्वयंभुंजीत॥एवंमासंचरित्वाएकादश्यामुद्यापनंकुर्यात्॥ उक्तप्रकारेणवृताचार्यः
सर्वतोभद्रस्थकलशेहैमंलक्ष्मीनारायणंविष्णोर्नुकमितिमंत्रेणसंस्थाप्यपंचामृतपुरःसरंसंपूज्यरात्रिंजारणादिनानिनयेत् । प्रातरग्निंप्रति
ष्ठाप्यान्वादध्यात्॥प्रधानंविष्णुं निषुसीदेतिमंत्रेणतिलोदनेनअरायिकाणेइतिमंत्रेणघृतोदनेन अष्टाक्षरमंत्रेण पायसेनचाष्टोत्तरशतसंख्या
काहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःप्रतिमासंपंचदशब्राह्मणान्सदन्नेनसंतर्प्यपीठंव्रतपूर्तयेगांचाचार्यायदत्त्वास्वयं
भुंजीत ॥ इतिधारणापारणव्रतम् ॥ अथाश्विनशुक्लैकादशीमारभ्यमासपर्यन्तंमासोपवासव्रतंविष्णुरहस्ये ॥ तिथ्यादिसंकीर्त्याऽऽ

त्मनोऽशेषपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्ध्येमहाविष्णुप्रीत्यर्थंमासोपवासव्रतंकरिष्ये ॥ प्रत्यहंत्रिकालस्नानंविष्णुमंत्रजपोविष्णु
पूजनंतुलसीदलानामर्पणमसदालापवर्जनंपुराणपठनंश्रवणंचब्राह्मणपूजनंयथाशक्तिदानंचएवमादिनियमान्कुर्यात् ॥ अंतेएकादश्यामु
द्यापनंकुर्यात् । उक्तप्रकारेणव्रताचार्यः सर्वतोभद्रस्थकलशेहैमंलक्ष्मीनारायणंसहस्रशीर्षेतिऋचाद्वादशाक्षरमनुनावासंस्थाप्यपुरुष
सूक्तेनपूजयेत् । कथाश्रवणादिनारात्रिंनीत्वाप्रातरग्निंप्रतिष्ठाप्यान्वादध्यात्॥लक्ष्मीनारायणंपायसद्रव्येणसहस्रसंख्याकाहुतिभिर्ब्रह्मादि
देवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचआचार्यायदत्त्वावेदशास्त्रसंपन्नांस्त्रिंशद्ब्राह्मणान्वस्त्रपात्रभूषणादिभिःसंपूज्य त्रिंशद्वास्त
न्मौल्यंवादक्षिणात्वेनदत्त्वासोपस्करांशय्यांगुणवतेज्ञानवतेद्विजायदत्त्वासदन्नेनब्राह्मणान्संतर्प्याशिषोगृहीत्वाविष्णुलोकगमनार्थंद्विजा
न्प्रार्थयेत् ॥ भोद्विजाअनुमोदध्वंविष्णुलोकंप्रयाम्यहम् ॥ ततोद्विजाःप्रतिवदेयुः ॥ व्रजव्रजनरश्रेष्ठविष्णुलोकमनामयम् ॥ विमानंवै
ष्णवंदिव्यंशय्यायांपरिकल्पितम् ॥ तेनविष्णुपदंयाहिसच्चिदानंदरूपिणम् ॥ ततोदीनानाथान्प्रतोष्यस्वयंमौनीभुंजीत ॥ अशक्तेनतु
कंदमूलफलपयोभक्षणादिनाकर्तव्यम् ॥ सर्वपापमुक्तोभवति ॥ इतिमासव्रतम् । अथचातुर्मास्येअवश्यंत्याज्यानिलिख्यंते ॥ "श्रावणे
वर्जयेच्छाकंदधिभाद्रपदेतथा ॥ दुग्धमाश्वयुजेमासिकार्तिकेद्विदलंत्यजेदि" ति स्कांदे । भविष्ये शाकव्रतंनित्यं द्विदलंबहुबीजंवृंताकं
जंबीरंराजमाषंरक्तमूलकंकूष्मांडमिक्षुदंडंबदरीनूतनफलंतिन्तिणीधात्रीमंचकखट्वादिशयनमनृतौभार्यामन्यादिनेमांसंमधुपलौदनमभ
क्ष्यंसितसर्षपमाशुधान्यमबीजफलं । विकारि सदैवंदशविधशाकम्॥मूलंपत्रं करीराग्रंफलं कांडादिरूढकाः ॥ त्वक्पुष्पंकवचंचेतिशा
कंदशविधंस्मृतम्॥दग्धान्नंपर्युषितान्नमुष्ट्रादिदुग्धं द्विजक्रीतरसाः ताम्रपात्रस्थंगव्यंच पाल्वलंजलमात्मार्थंपाचितंगृंजनंलशुनंपलांडुंप

टोलंमसूरं कुलित्थंकलिंगं विल्वमुदुंबरंभिःसटाप्राण्यंगचूर्णभूमिजलवणंनिष्पावान्संधितानि अन्यान्यपितिथिषुनिषिद्धानित्याज्यानि ॥ त्यक्तंयन्मासपर्यंतंतदंतेब्राह्मणायदत्त्वाव्रतपूर्तयेगांचदत्त्वास्वयंभुंजीत । अन्यान्यपिव्रतानितदुद्यापनानिचालेख्यंते । भविष्ये । कार्त्ति क्यांसर्वेषामुद्यापनानि नक्तव्रतेगौर्देयाएकांतरोपवासेगौः भूशयनेशय्याषष्ठकालभोजनेगौः व्रीहिगोधूमादिधान्यत्यागेहैयंगवीनंव्रीह्या दिशाकान्नेगौः पयोमधुदधिघृतव्रतेषुवासोयुगंगौश्वब्रह्मचर्येहैमविष्णुमूर्तिः तांबूलेवासोयुगुलंमौनेघृतकुंभोवस्त्रयुगंघंटाच देवाग्रेरंगमा लिकाकरणेधनुर्हैमपद्मंच देवालयेदीपकरणेदीपिकावासोयुगंच भूमिभोजनेपर्णभोजनेचकांस्यपात्रंगौश्व चतुष्पथदीपेगौः गोग्रासेवृष भः देवादीनांशतप्रदक्षिणाकरणेवस्त्रमेवमेवान्यवस्तुत्यागेगौर्देया ॥ अथवारव्रतानिसौरधर्मे ॥ तत्रमार्गशीर्षाद्यरविवारेसूर्यव्रतम् ॥ ति थ्यादिसंकीर्त्यात्मनोरोगक्षयपुत्रलाभादिप्राप्तिपूर्वकाभीष्टकामनासिद्ध्यर्थंवर्षात्मकंसूर्यव्रतंकरिष्येइतिसंकल्प्य गोमयोपलिप्तभूमौपं चरंगैर्द्वादशारंपद्मंविलिख्यतत्रताम्रपात्रंनिधायतन्मध्येरक्तचंदनादिनापद्मंविरच्यतत्रवक्ष्यमाणरीत्यासूर्यंसंपूजयेत् । मार्गशीर्षादिद्वाद शमासेषुक्रमेणदेवनामार्घ्यनैवेद्यंस्वभक्षणंदानंचज्ञेयम् ॥ तत्रमार्गशीर्षेमित्रोनालिकेरार्घ्यं साज्यगुडतंडुलनैवेद्यंतुलसीपत्रत्रयभक्षणंसा ज्यगुडभक्तदानं १ पौषेविष्णुः बीजपूरंकृसरान्नंपलत्रयं घृतं घृतदानंच ॥ २ माघे वरुणःपूगीफलंतिलगुडम्मुष्टित्रयंतिलाःसगुड कुडवतिलाः ३ फाल्गुने सूर्योजंबीरं सघृतंदधि दधितंडुलाः ४ चैत्रेभानुर्दाडिमंघृतपूरिकापलत्रयंदुग्धंमिष्टान्नं५ वैशाखे तपनोद्राक्षासघृ तंमाषान्नंमंगुष्ठार्द्धंगोमयंमाषाः ६ ज्येष्ठेइंद्रसहकारःकरंभमंजलित्रयं७ आषाढे रविर्जातीफलंपृथुकाः मरीचत्र० पृथुकाः८ श्रावणेगभस्ति मांस्त्रपुषीफलं यवसक्तुमुष्टित्रयंयवसक्तु यथेष्टंभोजनं ९ भाद्रपदे यमःकूष्मांडं तंडुलाज्यं पलद्वयंगोमूत्रं भोजनं १० आश्विनेहिरण्यरे

तंः दाडिमंशर्कराशर्करापलत्रयं शर्कराभक्तं ११ कार्तिकेदिवाकरोरंभाफलं पायसंपायसं पायसं १२ एवंवर्षपर्यंतंचरित्वांतेमार्गशी
र्षादिरविवासरेउद्यापनंकुर्यात् । उक्तप्रकारेणवृताचार्योमध्याह्नेसर्वतोभद्रेकलशंप्रतिष्ठाप्यतदुपरिरक्ताक्षयुतंताम्रमयंपूर्णपात्रंनिधायत
त्रद्वादशारंकमलंविरच्यतन्मध्येरौप्यमयंरथंप्रतिष्ठाप्यतदुपरिहैमंसंज्ञासहितंसहस्रकिरणमाकृष्णेनेतिमंत्रेणप्रतिष्ठाप्यपरितोद्वादशदले
षुद्वादशमासाधिपान्क्रमेणपूजयेत्॥मित्रं१विष्णुं२ वरुणं३ सूर्यं ४ भानुं५ तपनम्६इंद्रं७ रविं८ गभस्तिमंतं९ यमं१०हिरण्यरेतसं ११
दिवाकरं १२ ततोरक्ताक्षतपुष्पवस्त्रादिभिःसंपूज्यपरमान्नेननैवेद्यंदत्त्वाविशेषार्घ्यंनालिकेरयुतंदद्यात् ॥ तत्रमंत्रः ॥ नमःसहस्रकिरणसर्व
व्याधिविनाशन ॥गृहाणार्घ्यंमयादत्तंसंज्ञयासहितोरवे ॥ एवंपूजांसमाप्य ततःसूर्यदैवतंश्राद्धंकृत्वाततआचार्योऽग्निंप्रतिष्ठाप्यान्वाद
ध्यात्॥ संज्ञासहितंसहस्रकिरणंपायसद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिःद्वादशपरिवारदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥
ततोद्वादशब्राह्मणान्संतर्पयेत् ॥इतिसूर्यव्रतम्॥ अथाशादित्यव्रतं भविष्ये॥ आश्विनाद्यरविवारमारभ्यप्रतिरविवारं वर्षपर्यंतंकुर्यात्॥
तिथ्यादिसंकीर्त्यात्मनःसकलरोगनिरसनपूर्वकपुत्रपौत्रसकलाभीष्टसिद्धिद्वारासवितृप्रीत्यर्थमाशादित्यव्रतंकरिष्ये ॥ इतिसंकल्प्य
गोमयोपलिप्तभूमौरक्तचंदनादिनावर्तुलमंडलंविरच्यतत्रमासाधिपंदेवमावाह्यषोडशोपचारैःसंपूज्यरक्तपुष्पाक्षतादियुक्तंसजलंताम्रपात्रे
णार्घ्यंभूमौजानुनीनिपात्यदद्यात्॥तत्रमंत्रः॥यथाशाविमलाःसर्वास्तवभास्करभानुभिः ॥ तथाशाविमलामह्यंकुरुनित्यंममार्घ्यतः ॥
ततोनमस्कारः ॥ नमोस्तुतेपापविनाशनायविश्वात्मनेसप्ततुरंगमाय ॥ सामर्ग्यजुर्धामनिधेविधात्रेभवाब्धिपोतायनमःसवित्रे॥अनेनमं
त्रेणमासाधिपंनाममंत्रेणपूजयेत्॥मासाधिपनामानि। सूर्यः १ धाता २ वरुणः ३ माधवः ४ हरिः ५ रविः ६ रुद्रः७भर्गः ८ स्वर्णरेताः ९

अर्यमा १० भानुः ११ भास्करः १२ एवंप्रतिभानुवारंवर्षपर्यन्तंचरित्वांतेआश्विनाद्यरविवारेउद्यापनंकुर्यात् ॥ ततो वृताचार्यः सर्वतोभद्रेरक्तवस्त्रवेष्टितंताम्रकलशंप्रतिष्ठाप्य ताम्रमयंपूर्णपात्रंनिधाय तत्ररक्ताक्षतैर्द्वादशारंकमलंविरच्यतन्मध्येरौप्यरथेहैमंसवितारमाकृष्णेनेतिमंत्रेणसंस्थाप्यपरितोद्वादशदलेषुपूर्वोक्तद्वादशमासाधिपान्प्रतिष्ठाप्यउक्तप्रकारेणपूजयेत् ॥ ततोऽग्निंप्रतिष्ठाप्यहोमयेत् ॥ प्रधानं सवितारं पायसद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिः मासाधिपद्वादशदेवताः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपूर्वोक्तद्वादशनामभिःद्वादशब्राह्मणान्वस्त्रादिभिःसंपूज्य तेभ्यःशालितंडुलसंभवैः पक्वान्नैस्तंडुलैर्वापूरितान्रक्तकलशान्रक्तवस्त्रवेष्टितान्सदक्षिणान्दत्त्वाऽऽचार्यायपीठंव्रतपूर्तयेगांचदत्त्वासदन्नेनब्राह्मणान्संतर्प्याशिषोगृहीत्वास्वयंनक्तंभुंजीत ॥ अत्रपायसपूरितताम्रपात्रदानमुक्तंस्कांदे । होमकरणमपिकृताकृतम् । एवंकृतेसर्वव्याध्यादिदुःखैर्मुक्तोभवति ॥ इतिरविवारव्रतम् ॥ अथसोमवारव्रतंस्कांदे ॥ तत्रग्रहणविधिः ॥ श्रावणेचैत्रवैशाखेज्येष्ठेचमार्गशीर्षके॥एतेषामन्यतमेमासिशुक्लपक्षेइंदुवारयुताष्टम्यांग्राह्यम् ॥ अथवाप्रथमसोमवासरेचयावज्जीवंकर्तव्यमथवाष्टवर्षपर्यंतंकर्तव्यमंतेउद्यापनंकुर्यात् ॥ तद्यथा । तिथ्यादिसंकीर्त्याऽऽत्मनोऽशेषपापक्षयपूर्वकसत्पुत्रप्राप्तिधनधान्यैश्वर्यादिवृद्धिद्वाराऽमुककामनयाचरितस्यसोमवारव्रतस्यसांगतासिद्ध्येतदुद्यापनंकरिष्ये ॥ वृताचार्यः चतुर्द्वारोपशोभितमंडपांतः अष्टादशांगुलोत्सेधांवितस्तिद्वयविस्तृतांसमचतुरस्रांमृदावेदिंनिधाय तत्रशुक्लतंडुलैःषोडशारंकमलंविरच्य अथवापंचरंगशोभितंलिंगतोभद्रंविरच्यतत्रब्रह्मादिदेवताआवाह्यतदुपरिअक्षतपुंजेश्वेतवस्त्रयुगोपेतंकलशम्प्रतिष्ठाप्यतदुपरिसाक्षतंपूर्णपात्रंनिधाय तत्रहैमंशिवंत्र्यंबकमितिमंत्रेणहैमींगौरींचगौरीर्मिमायेतिमंत्रेणपुरतोराजतंवृषभमृषभंमाइतिमंत्रेणप्रतिष्ठाप्यपुरतःपूर्वादिक्रमेणअनंतं १

सूक्ष्मं २ शिवम् ३ उत्तमं ४ त्रिमूर्तिं ५ रुद्रं ६ श्रीकंठं ७ शिखंडिनं ८ पुनराग्नेयादिविदिक्षु गणेशं १ मातृः २ दुर्गां ३ क्षेत्रपालं ४ पुनःपूर्वा दिदिक्षुलोकेशांस्तत्तन्मंत्रैःप्रतिष्ठाप्यपंचाक्षर्यापूजयेत् ॥ पुष्पोत्तरमंगपूजा ॥ शिवायनमः पादौपू० शंकराय० गुल्फौ० भवहारिणे० जानुनीपू० शूलपाणयेन० कटीं० शंभवे० गुह्यं० महादेवाय० नाभिं० विश्वकर्त्रे० उदरं० सर्वतोमुखाय० पार्श्वौ० स्थाणवे० स्तनौ० नीलकंठाय०कंठं० देवाय०मुखं० त्रिनेत्राय०नेत्रे० शर्वाय०ललाटं० शशिभूषणाय०शिरःपू० देवाधिपाय० सर्वांगंपू० एवंसंपूज्यरात्रिंजागरणादिनानीत्वा प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ सोमं शिवं त्र्यंबकमितिमंत्रेणपलाशसमिद्भिः आप्याय स्वेतिमंत्रेणपृषदाज्येन त्वंसोमासीतिमंत्रेण यवव्रीहिपायसतिलाज्यद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः गौरींचत्रिमध्वाक्तदू र्वाभिस्तावतीभिःपरिवारदेवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ केचनगौरीहोमंपृथङ्नेच्छंति ॥ ततः षोडशत्रयोदशवाब्रा ह्मणान्वक्ष्यमाणनामभिःसंपूज्यतावताफलपक्वान्नैरभावेतंदुलैर्वा पूरितान्घटान्दक्षिणायुतान्दद्यात् ॥ षोडशनामानि ॥ सोमेश्वरः १ ईशानः २ शंकरः ३ गिरिजाधवः ४ महेशः ५ सर्वभूतेशः ६ स्मरारिः ७ त्रिपुरांतकः ८ शिवः ९ पशुपतिः १० शंभुः ११ त्र्यंबकः १२ चंद्रशेखरः १३ गंगाधरः १४ महादेवः १५ वामदेवः १६ ॥ त्रयोदशपक्षे ॥ भवः १ शर्वः २ रुद्रः ३ पशुपतिः ४ उग्रः ५ महान् ६ भीमः ७ ईशानः ८ सद्योजातः ९ वामदेवः १० अघोरः ११ तत्पुरुषः १२ ईशानः १३ ॥ ततःपीठंव्रतपू र्तयेधवलांगांच आचार्यायदत्त्वाआशिषोगृहीत्वास्वयंभुंजीत ॥ भविष्येतु प्रकारांतरेणसोमवारव्रतम् ॥ तत्रव्रतविधिः ॥ प्रातःनद्यां दौस्नात्वा ॥ अमुककामनयासोमवारव्रतंकरिष्ये ॥ इतिसंकल्प्य प्रदोषेपीठदेवंवक्ष्यमाणप्रकारेणपूजयेत् ॥ इदंसोमवारव्रतमष्टेंदु

वारात्मकं नवमेसोमवारे उद्यापनंकुर्यात् । तत्रप्रथमेसोमवारे बीजपूरकाष्ठेनदंतधावनंकुर्यात् चूतपल्लवचंदनादियुतेकुंभेसाक्षतपात्रे आ
धारशक्तिसहितंशिवंपंचाक्षर्याप्रतिष्ठाप्यश्वेतवस्त्रपुष्पैःप्रपूज्यविविधभक्ष्यभोज्यनैवेद्यंबीजपूर फलंचदत्त्वास्वयंचंदनंप्राश्यसोमेशंध्याय
न्दर्भशय्यायांस्वपेत् । भौमवासरेब्राह्मणभोजनपुरःसरंपारणंकुर्यात् । एवंकृतेसर्वव्याधिविनाशनंभवति ॥ द्वितीयादौविशेषोलिख्यते
अन्यत्पूर्ववत्समानम् ॥ द्वितीयेकरंजदंतकाष्ठं ज्येष्ठाशक्तियुतंसूक्ष्मंदेवं शतपत्रपुष्पं नारिंगफलं घृतपाचितशुभ्रपूरिकानैवेद्यम् आत्म
नोमधुभक्षणं एवंकृतेगोलक्षफलंप्राप्नोति ॥ तृतीयेवरदंतकाष्ठं रौद्राशक्तियुतंशिवोत्तमंदेवं जातीपुष्पं शुभ्रभक्ष्यनैवेद्यं दाडिमफलं
गोमूत्रप्राशनं कन्याकोटिदानफलम् ॥ चतुर्थे अपामार्गदंतकाष्ठमेकशक्तियुतंरुद्रंदेवं चंपकपुष्पं कदलीफलं क्षीरशर्करानैवेद्यं
दधिप्राशनमयुतयज्ञफलम् ॥ पंचमे अश्वत्थदंतकाष्ठमुमाशक्तियुतं रुद्रंदेवं पद्मपुष्पं दधिभक्तनैवेद्यं कूष्मांडफलं घृतप्राशनम् ॥
सप्तजन्मार्जितब्रह्महत्यानाशनरूपंफलम् ॥ षष्ठे जंबूदंतकाष्ठं त्रिमूर्तिशक्तियुतं बलदेवं करवीरपुष्पं फल पायसमंडकनैवेद्यं खर्जूरी
फलं कुशोदकप्राशनं षडब्दफलंप्राप्नोति ॥ सप्तमे प्लक्षजंदंतकाष्ठं बलप्रमथिनीशक्तियुतंश्रीकंठंदेवम् बकुलपुष्पं पायसनैवेद्यं नालि
केरफलं क्षीरभक्षणं सप्तसागरसहितभूमिदानफलम् ॥ अष्टमे खादिरदंतकाष्ठं सर्वभूतदमनाशक्तियुतंशिखंडिनंदेवं सुगंधपुष्पं
नानाविधफलं नानाविधभक्ष्यभोज्यनैवेद्यम् गोमयप्राशनम् ॥ सर्वदानोद्भवंफलंसर्वरात्रौजागरणंपुराणपठनादि आवश्यकम् ॥ नवमे
सोमवारेउद्यापनंकुर्यात् ॥ तद्यथा । तिथ्यादिसंकीर्त्य ममाऽभीष्टकामनासिद्ध्यर्थमाचरितंयत्सोमवारव्रतंतत्संपूर्णफलावाप्तये
तदुद्यापनंकरिष्ये ॥ पूर्ववद्वृताचार्यः चतुर्द्वारोपशोभितमंडपांतः मृदाष्टांगुलोच्छ्रितांसमचतुरस्रामष्टादशांगुलप्रमाणांवेदिंकृत्वा

तत्रलिंगतोभद्रंविरच्यवेदीपरितोष्टदिक्षु पंचवर्णैःपद्मानिविरच्यवेद्यांब्रह्मादिदेवताआवाह्य तत्रकलशंपूर्ववत्संस्थाप्य तत्ररुक्मशय्यायां हैमंसर्वशक्तियुतंसोमेशं ॐनमःशिवायेतिप्रतिष्ठाप्यवेदिंपरितःस्थापनविधिनाअष्टौकलशान्प्रतिष्ठाप्यतेषुक्रमेणदेवानावाहयेत् ॥ अनंतं १ सूक्ष्मं २ शिवम् ३ उत्तमं ४ त्रिमूर्तिं ५ रुद्रं ६ श्रीकंठं ७ शिखंडिनम् ८ इतिप्रतिष्ठाप्यपूजयेत् । देवायवस्त्रालंकारनानाविध पुष्पकर्पूरधूपदीपविविधनैवेद्यफलतांबूलदक्षिणाछत्रचामरादर्शादिसमर्प्यस्वयंपंचगव्यंप्राश्यपुराणपठनादिनारात्रिंनिनयेत् । प्रातर्देवं संपूज्य अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं सर्वशक्तियुतंसोमेशंपलाशसमिद्घृतपायसतिलव्रीहियवमधुदूर्वाद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः तथाऽनंतादिशिखंड्यंताःअष्टौदेवतास्तैरेवद्रव्यैःप्रतिद्रव्यमष्टाष्टसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ क्रमेणद्रव्याष्टकस्यहोममंत्राः ॥ त्र्यंबकं० १ आप्यायस्व० २ ॐनमःशिवाय० ३ तमीशानं० ४ अभित्वादेव० ५ कद्रुद्राय० ६ तत्पुरुषाय० ७ ऋतंसत्यंपरंब्रह्म० ८ परिवारदेवतानांनाममंत्राः ॥ एवंहोमंसंपाद्यआचार्यंवस्त्रादिनासंपूज्य पीठंव्रतपूर्तयेधवलांगांचदत्त्वा अन्यानष्टौब्राह्मणान्वस्त्रादिनासंपूज्यशालितंडुलोद्भवपक्वान्नपूरितानष्टौकलशान्दक्षिणासहितान्दद्यात् ॥ तत्र मंत्रः ॥ पक्वान्नपूरितंकुंभंदक्षिणादिसमन्वितम् ॥ गृहाणत्वंद्विजश्रेष्ठव्रतसंपूर्तिहेतवे ॥ इतिदत्त्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत ॥ इतिसोमवारव्रतम् ॥ अथश्रावणाद्यसोमवारेशिवामुष्टिव्रतं शिवधर्मोत्तरे ॥ दंतधावनपूर्वकंनद्यादौस्नात्वा नित्यकर्मनिर्वर्त्य शिवसन्निधौगत्वा तत्र संकल्पयेत् ॥ तिथ्यादिसंकीर्त्य ममइहजन्मनि अखिलपापक्षयपूर्वकदुःखदारिद्र्यनाशविपुलसुखसौभाग्यैश्वर्यपुत्रपौत्रप्राप्त्यर्थंश्रीशिवप्रीत्यर्थंपंचवर्षात्मकंपंचधान्येनशिवामुष्टिव्रतंकरिष्ये ॥ इतिसंकल्प्य गणेशपूजनादिकृत्वाशिवंपंचामृतपुरःसरंसंपूज्य

मंत्रपुष्पांतेधान्यंसमर्प्य प्रथमंशालितंदुलं द्वितीयंयवम् तृतीयंगोधूमं चतुर्थंचणकम् पंचमंमुद्गंच एकैकंपंचप्रस्थंप्रस्थंवा अशक्तौनि
ष्किंचनेतुन्यूनम् ततःप्रार्थयेत् ॥ प्रसीददेवदेवेशप्रसीदपरमेश्वर ॥ प्रसीदसोमसर्वज्ञप्रसीदकरुणाकर ॥ शिवःशर्वोमहादेवोरुद्रोभूतगणे
श्वरः॥ममास्तुसहपार्वत्याशंकरः शंकरःसदा ॥ एवंपंचसंवत्सरंत्रयमेकंवाचरेत् । समाप्तेउद्यापनंकुर्यात्॥तत्रपूर्ववत्संकल्पांतेवृताचार्यः
एकलिंगोद्भवेपीठेकलशंसंस्थाप्य राजतंपूर्णपात्रंनिधाय तत्रहैमीमुमेशप्रतिमांराजतंवृषभंसंस्थाप्य लोकेशंवा पूर्ववत्पूजयेत् ॥ सुवर्ण
निर्मितंधान्यंकृत्वापंचसंख्ययात्रीणिएकैकंवासमर्चयेद्धान्यंचसमर्पयेत् ॥ सुवर्णबिल्वदलानिअथवारौप्यमयंकृत्वाधान्यसंख्ययासम
र्पयेद्रात्रिंकथाश्रवणादिनानिनयेत् ॥ प्रातःपूर्ववत्पूजांकृत्वाअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानमुमेशंसमित्तिलाज्यद्रव्यैःगा
यत्रीमंत्रेणअष्टोत्तरशतं लोकपालान्ब्रह्मादिदेवताश्चैकैकयाऽऽज्याहुत्यायक्ष्ये ॥ ततःशिवपंचरत्नंसमर्प्य आचार्यायपीठंव्रतपूर्त
येगांचदत्त्वा दक्षिणादिनाप्रतोष्य द्विजदम्पतीसंपूज्यपायसान्नेनभोजयेत्स्वयंभुंजीत ॥ अनंतपूर्णतास्थालीसर्वकामफलप्रदा ॥ द्रौ
पद्यादीयतेतेनकष्टोत्पत्तिविनाशिनी ॥ व्रतेनाराधितंतस्यपंचवर्षैणएवच ॥ तेनव्रतप्रभावेणपुनाराज्यंचप्राप्तवान् ॥ सर्वैवर्णाव्रतमाचरे
युः ॥ एवंयःकुरुतेदेवितवाग्रेव्रतमुत्तमम् ॥ कामनापूरयेत्तस्यप्राप्तंराज्यमकंटकम् ॥ तथापिसर्ववर्णानांपुत्रपौत्रप्रवर्द्धनम्॥राज्यार्थीलभ
तेराज्यंमोक्षार्थीमोक्षमेवच ॥ इतिशिवामुष्टिव्रतम् ॥ इतिसोमवारव्रतम् ॥ ॥ अथभौमवारव्रतम् ॥ तत्रश्रावणशुक्लप्रथमभौमवारेमंग
लागौरीव्रतं भविष्ये ॥ तिथ्यादिसंकीर्त्य आत्मनोऽवैधव्यपुत्रपौत्राद्यैहिकनानाभोगप्राप्तिपूर्वकगौरीलोकप्राप्त्यर्थमाचरितंय
त्पंचवर्षात्मकंमंगलागौरीव्रतंसत्संपूर्णफलावाप्तये तदुद्यापनंकरिष्ये ॥ वृताचार्यः एकलिंगोद्भवेब्रह्मादिदेवतास्थापनपूर्वकंदृषदुपरिक

लशंप्रतिष्ठाप्य तत्रहैमींगौरींगौरीमिमायेतिमंत्रेणप्रतिष्ठाप्यपूजयेत्। परितःपिष्टजान्डमर्वाकारान्षोडशतंतुवर्तियुतान्दीपान्प्रज्वाल्यस
मान्साग्रान्षोडशपर्वयुतान्षोडशदूर्वांकुरान्समर्प्यसौभाग्यवस्तुजातंसुवर्णवर्तियुतंराजतदीपंचसमर्प्य कथाश्रवणादिनारात्रिंनिनयेत्।
प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात्॥ गौरींघृततिलाक्षतबिल्वदलद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्या
हुत्यायक्ष्ये॥ ततःषोडशाष्टौचतुरोवादंपतीनभावेएकंवासंपूज्य सौभाग्यद्रव्यवस्त्रदक्षिणाफलतांबूलादिसहितंपक्वान्नपूरितंवंशपात्रमु
पायनमिदंदेवइतिमंत्रंपठंस्तेभ्योदत्त्वा ततआचार्यंसंपूज्यरौप्यपात्रेसुवर्णवर्तिसंयुतंदीपंकृत्वाऽऽचार्यायदत्त्वा सोपस्करंपीठंव्रतपूर्तयेगां
चदत्त्वा ताम्रपात्रंपक्वान्नपूरितंवस्त्रादियुतंमात्रेदत्त्वापरमान्नेनभूदेवान्संतर्प्य आशिषोगृहीत्वामौनी इष्टजनैःसहभुंजीत॥इतिमंगलागौरीव्र
तम्॥अथभौमवारव्रतंभविष्ये॥तत्रादौयंत्रप्रकारमाह॥त्रिकोणंपूर्वमुद्धृत्यपंचधाविभजेत्ततः॥तृतीयंरेखाचिह्नाभ्यांलांछयेत्समभागतः॥
आद्यरेखाग्रयुगुलंतृतीयावह्नयोन्यसेत्॥तृतीयरेखामध्येतुचिह्नयेत्समभागतः॥ तुर्याचिह्नद्वयेनाथत्रिभिश्चिह्नैस्तुपंचमी॥तृतीयाग्रेप्रकु
र्वीतपंचम्यांमध्यचिह्नगम्॥ तुर्याग्रेयोजयेत्सम्यक्पंचम्याचिह्नयोर्द्वयोः॥ युक्त्यामध्यद्वयेदद्यात्रिकोणेविंशतिर्भवेत्॥ तृतीयतुर्ययोर्म
ध्येत्रिकोणेतुसमर्चयेत्॥ एवंतदग्रतोमंत्रांस्त्रिकोणेदक्षिणक्रमात्॥ मंगलाद्यांस्तारपूर्वान्नमोंतानेकविंशतिम्। एकविंशतिकोष्ठेषुनामभिं
त्रान्समालिखेत्॥ ततःपूजाप्रकर्तव्यापुत्रसंपत्तिहेतवे॥ इतियंत्रम्॥ अथपूजाविधिः॥ मार्गशीर्षेमाघेवैशाखेसुमासेवाशुक्लपक्षेचन्द्रा
नुकूल्येभौमवासरेअरुणोदयकाले अपामार्गकाष्ठेनदंतधावनंमौनेनकृत्वा आचम्य तिलामलकचूर्णेनांगोद्वर्तनंकृत्वा नद्यादौगृहेवास्ना ॥ ५५ ॥
त्वाधौतरक्तवस्त्रमुत्तरीयंचधृत्वासंध्यादिविधायरक्तचंदनरक्ताक्षतैः रक्तपुष्पैश्चताम्रपात्रस्थजलेनांगारकगायत्र्या अग्निर्मूर्द्धेतिमंत्रेणवा

एकविंशतिवारमंगारकायार्घ्यंदत्त्वा ततोगृहमागत्यभूम्यपतितेनगोमूत्रेणसुरभिगोमयेनहस्तमात्रांभूमिंविलिप्य तदुपरिसाग्रंत्रिकोणंरक्त चंदनेनसंविलिख्य तत्रप्रस्थगोधूमराशिंकृत्वातत्रताम्रमयंरक्तंमृन्मयंवाकलशंसंस्थाप्यतदुपरिताम्रमयंपूर्णपात्रंनिधाय तत्ररक्तचंदनेन त्रिकोणंमंडलंविधाय तत्रताम्रमयंभूर्जपत्रमयंवात्रिकोणमेकविंशतिकोष्ठात्मकमेकविंशतिनामयुतंयंत्रंसंस्थाप्यपूजासामग्रींसंपाद्य संक ल्पंकुर्यात् ॥ तद्यथा । शुद्धासनेउपविश्यप्राणानायम्य देशकालसंकीर्तनांते आत्मनःऋणाद्यपनुत्तिपूर्वकधनधान्यपुत्रपौत्राद्यभी ष्टमनोरथसिद्ध्यर्थंमंगलव्रतंतत्पूजनंचकरिष्ये ॥ इतिसंकल्प्य गणेशपूजनपूर्वकंपुण्याहवाचनादिकृत्वापूजामारभेत् ॥ तत्रादौदे वंप्रार्थयेत् ॥ अथदेवेशतेभक्त्याकरिष्येव्रतमुत्तमम् ॥ ऋणदुःखादिनाशायपुत्रसंतानहेतवे ॥ अभीष्टान्ममदेवेशकुरुपूर्णा न्मनोरथान् ॥ ततोभूतशुद्ध्यादिकृत्वान्यासंकुर्यात् ॥ ॐ मंगलायनमः शिखायां भूमिपुत्राय० मूर्ध्नि० ऋणहर्त्रेन० लला टे० धनप्रदाय०चक्षुषोः० स्थिरासनाय० कर्णयोः० महाकायाय० नासिकयोः० सर्वकर्मावरोधकाय० मुखे० लोहिताय० हनौ० लोहिताक्षाय० कंठे० सामगानांकृपाकराय० स्कंधयोः० धरात्मजाय० बाह्वोः० कुजाय० करयोः० भौमाय० हृदये० भूतिदाय० उदरे० भूमिनंदनाय० नाभौ० अंगारकाय० कट्यां० यमाय० ऊर्वोः० सर्वरोगापहारकाय० जान्वोः० वृष्टिक र्त्रे० जंघायां० वृष्टिहर्त्रे० गुल्फयोः० सर्वकामफलप्रदाय० पादयोः० ततो मां मीं मूं मैं मौं मः इतिषडक्षरैःषडंगन्यासंकृत्वा स्ववामभागेकलशाराधनंकृत्वा तत्पश्चिमतः स्ववामभागेषट्कोणंवृत्तंचतुरस्रात्मकंमंडलंसाधारमर्घ्यपात्रंनिधाय जलेनापूर्यगंधाक्षत पुष्पादितत्रप्रक्षिप्यमंडलेनगायत्र्यावाऽष्टवारमभिमंत्रयेत् ॥ तद्दक्षिणेत्रिकोणमंडलेसाधारं सजलंप्रोक्षणीपात्रंसंस्थाप्य गंधपुष्पाक्षतादि

प्रक्षिप्यमूलेनाष्टवारमभिमंत्र्य तज्जलंकिंचिदर्घ्यपात्रेनिक्षिप्य धेनुमुद्रांप्रदर्श्य प्रोक्षणीपात्रजलेनात्मानं दक्षिणस्थपूजाद्रव्याणिचप्रोक्ष्य पात्रांतरेस्थापितंयंत्ररूपंदेवंध्यायेत् ॥ पिंगाक्षंरक्तवर्णंसुरतरुदलभंरक्तवस्त्रेणयुक्तंमेषारूढंग्रहेंद्रंह्यभिलषितजनैःपूजितंसुप्रसन्नम् ॥ ध्यायेदेतान्दधानंवरदकरयुतंशूलशक्तिगदांचभौमंचैश्वर्यसिद्धंनिखिलनिधिविभुंमंगलंचिंतयामि ॥ एह्येहिभगवन्भौमस्थानेचात्रास्थिरोभव ॥ त्वयिसर्वमिदंप्रोतंत्रैलोक्यंसचराचरम् ॥ उज्जयिन्यांसमुद्भूतशूलशक्तिगदाधर ॥ भरद्वाजकुलोत्पन्नस्कंदप्रियतडित्प्रभ ॥ यावत्पूजासमाप्येततावत्त्वंसन्निधौभव ॥ पूजांगृहाणवरदोभव ॥ ॐ ह्रीं श्रीं लं मंगलायनमः ॥ अयंमूलमंत्रः ॥ अंगारकायविद्महेभूमिपुत्रायधीमहि ॥ तन्नोभौमःप्रचोदयात् ॥ इयंगायत्री ॥ अग्निर्मूर्द्धेतिवैदिकोमंत्रः ॥ मंगलंसांगंसपरिवारमावाहयामि ॥ प्रत्युपचारंमंत्रत्रयंपठेत् ॥ भूमिपुत्रायनमः आसनं० धनप्रदाय० पाद्यं० स्थिरासनाय० अर्घ्यंस० मंगलाय० दधिमधुसर्पिर्युतंमधुपर्कं० महाकायाय० आचमनीयं० ऋणहर्त्रेन० पंचामृतस्नानं० ॥ ततोगंधादिभिःसम्पूज्य पुरुषसूक्तेनाभिषेकंकुर्यात् ॥ सर्वकर्मावरोधकायनमः शुद्धोदकस्नानं० ततःपूर्वस्थापनविधिना स्थापितेकलशेग्रहावैप्रतिष्ठेतिप्रतिष्ठाप्य परितः पूर्वादिक्रमेणपरिवारान्स्थापयेत्॥पूर्वेशक्तिम् आग्नेय्येशूलं दक्षिणेधनुः नैर्ऋत्येशरं पश्चिमेगदां वायव्यांवरदम् उत्तरेषडाननम् ऐशानेधरामावाह्य सहैवपूजयेत् ॥ लोहिताय०वस्त्रं० लोहिताक्षाय० उपवीतं०सामगानांकृपाकराय० गंधं० धरात्मजाय०पुष्पं०॥अथैकविंशतिकोष्ठेषुअंगानिएकविंशतिनामभिःपूजयेत्॥ मंगलाय० पादौ० भूमिपुत्राय० गुल्फौ० ऋणहर्त्रे० जंघे० धनप्रदाय० जानुनी० स्थिरासनाय० ऊरू० महाकायाय० कटी० सर्वकर्मावरोधकाय० नाभिं० लोहिताय० उदरं० लोहिताक्षाय० हृदयं० सामगानांकृपाकरायन० करौ० धरात्मजाय० बाहू० कुजाय०

स्कंधौ० भौमाय० कंठं० भूतिप्रदाय० हनुं० भूमिनंदनाय० मुखं० अंगारकाय० नासिकां० यमाय० कर्णौ० सर्वरोगापहारकाय० चक्षुषी० वृष्टिकर्त्रे० ललाटं० वृष्टिहर्त्रे० मूर्द्धानं० सर्वकामफलप्रदाय० शिखां० ॥ ततोनानापरिमलद्रव्यार्पणम् ॥ कुजाय० धूपं० भौमाय० दीपं० भूतिदाय० गुडमिश्रगोधूमान्ननैवेद्यंसोपस्करंवा भूमिनंदनाय० फलं० अंगारकाय० तांबूलं० यमाय० दक्षिणां सर्वरोगापहारकाय० नीराजनंस० नानावैदिकमंत्रपाठपुरःसरं वृष्टिकर्त्रे० पुष्पांजलिं० वृष्टिहर्त्रेन० प्रदक्षिणां० सर्वकामफलप्रदाय० नमस्कारं० ॥ भूमिपुत्रमहातेजःस्वेदोद्भवपिनाकिनः ॥ धनार्थीत्वांप्रपन्नोऽस्मिगृहाणार्घ्यंनमोस्तुते ॥ अनेनमंत्रेणरक्तपुष्पाक्षतयुतेनता म्रपात्रस्थजलेनैकविंशतिमर्घ्याणिदद्यात् ॥ मंगलाय० इदमर्घ्यंसमर्पयामि ॥ एवमेकविंशतिनाम्नामूहःकार्यः ॥ ततोजपः ॥ अस्यश्री मंगलमं० ब्रह्माऋषिः त्रिष्टुप्छन्दः मंगलोदेवता मंबीजं माहेश्वरोभूमिपुत्रइतिशक्तिः ममऋणमोचनाद्यभीष्टसिद्ध्यर्थमेकशताधिकद्वि सहस्रपरिमितजपमहंकरिष्ये ॥ मां मीं मूं मैं मौं मः अनेनकरन्यासंहृदयादिन्यासंकृत्वा जपेत् २१०० ॥ एवंमूलमंत्रंजप्त्वाअंतेपूर्ववत्ष डंगन्यासंकृत्वाकवचंजपेत् ॥तद्यथा॥ शिखायांमंगलःपातुभूमिपुत्रस्तुमूर्द्धनि॥ललाटेऋणहर्ताचचक्षुषोश्चधनप्रदः॥स्थिरासनःश्रवणयो र्महाकायस्तुनासिके ॥ आस्यजिह्वोष्टदंतेषुसर्वकर्मावरोधकः ॥ हनौमांलोहितःपातुकंठंलोहितलोचनः ॥ स्कंधयोरुभयोरक्षेत्सामगानां कृपाकरः ॥ धरात्मजोभुजौपातुकुजोरक्षेत्करद्वयम् ॥ भौमोमांहृदयेपातुभूमिजस्तुतथोदरे ॥ भूनंदनोऽथनाभौचकट्यामंगारकोऽवतु ॥ सक्थिनीमंगलोरक्षेज्जान्वोरोगापहारकः ॥ जंघयोर्वृष्टिकर्ताचवृष्टिहर्ताचगुल्फयोः ॥ पादांगुष्ठौचपादौचसर्वकर्मफलप्रदः ॥ शक्तिर्मेपू र्वतोरक्षेच्छूलंरक्षतुदक्षिणे ॥ पश्चिमेमांधनूरक्षेदुत्तरेचशरस्तथा ॥ ऊर्ध्वंपिंडाननःपातुअधस्तात्पृथिवीतथा ॥ एवंहिकवचंजप्त्वापश्चाद्दो

मंसमाचरेत् ॥ अथहोमः ॥ तिथ्याद्युच्चार्यमंगलव्रतांगभूतकृतजपदशांशेनहवनंकरिष्ये ॥ इतिसंकल्प्यदेवाग्रेसन्मृदात्रिकोणंस्थंडिलंकृ
त्वास्वगृह्यविधिनाअग्निंप्रतिष्ठाप्यान्वादध्यात्॥ अत्रखादिरइध्मा॥अत्रप्रधानं मंगलं गुडाज्यमिश्रिततिलद्रव्येणकृतजपदशांशेनयक्ष्ये ॥
मूलमंत्रेणजुहुयात् ॥ खर्जुरीफलेनपूर्णाहुतिंहुत्वा होमशेषंसमापयेत् ॥ ततोगायत्रींपठित्वामंगलंतर्पयामिइतिगोदुग्धेनतर्पणंकुर्यात् ॥
एवमेकविंशतिनाम्नामूहःकार्यः ॥ तथैव अनृणाइतिमंत्रंपठित्वामार्जनंकुर्यात् ॥ ततोवायनम् ॥ मंगलरूपिणेद्विजायइदंपा
द्यमित्यादिसंपूज्यतांबूलदक्षिणासहितानेकविंशतिसंख्याकान्गुडमिश्रिततिलचूर्णलड्डुकान्दद्यात् ॥ तत्रमंत्रः ॥ मंगलायनमस्तुभ्यं
सर्वमंगलकारक ॥ वायनेनचसंतुष्टोममकामान्प्रपूरय ॥ अनेनवायनेनऋणमोचनभौमःप्रीयताम् ॥ ततःखादिरांगारेणऋणसंज्ञ
करेखात्रयंकृत्वावामपादतलेनमार्जयेत् ॥ तत्रमंत्रः ॥ दुःखदौर्भाग्यनाशायधनसंतानहेतवे ॥ मार्जयाम्यसितारेखास्तिस्रोजन्मच
योद्भवाः ॥ ततोमंगलस्तोत्रम्पठेत् ॥ मंगलोभूमिपुत्रश्चऋणहर्ताधनप्रदः ॥ स्थिरासनोमहाकायःसर्वकर्मावरोधकः ॥ लोहितोलोहिता
क्षश्चसामगानांकृपाकरः ॥ धरात्मजःकुजोभौमोभूतिदोभूमिनंदनः ॥ अंगारकोयमश्चैवसर्वरोगापहारकः ॥ वृष्टिकर्तापहर्ताचसर्वका
मफलप्रदः ॥ एतानिकुजनामानिनित्यंयःश्रयतःपठेत् ॥ ऋणंनजायतेतस्यधनंयच्छतिवांछितम् ॥ उत्तिष्ठब्रह्मणस्पतइतिउत्था
प्यविसर्जयेत् ॥ कथांश्रुत्वाब्राह्मणभोजनपुरःसरंसगुडगोधूमान्नंमौनीभुंजीत ॥ एवंप्रकारेणप्रतिभौमवासरमेकविंशतिभौमवासरपर्यंतं
कर्तव्यं ततोद्वाविंशतितमेभौमवासरेउद्यापनंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यअभीष्टकामनासिद्ध्यर्थमाचरितंयद्भौमवासरव्र
तंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये ॥ इतिसंकल्प्य वृताचार्यंउक्तविधिनासर्वतोभद्रेकलशप्रतिष्ठांतंकृत्वा तत्रहैमंमंगलमुक्तपूजा

विधिनासंपूज्यसुवर्णपुष्पैर्विशेषपूजांकृत्वा पुराणपठनादिनारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं मंगलंगुडाज्यमिश्रिततिलद्रव्येणाष्टोत्तरसहस्रसंख्याकाहुतिभिःमूलमंत्रेणगायत्र्यावावैदिकेनवा एकविंशतिपरिवारदेवताःतेनैवद्रव्येणाष्टाष्टसंख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाऽऽज्याहुत्यायक्ष्ये ॥ मंगलोभूमिपुत्रश्चेत्याद्याएकविंशतिदेवतास्तासांनाममंत्रेणहोमः ॥ सर्वंहोमंसंपाद्यपूर्वोक्तैकविंशतिनामभिःएकविंशतिद्विजान्संपूज्य तेभ्योरक्तचंदनचर्चितान्गुडमिश्रिततिलचूर्णपूरितान्रक्तवस्त्रदक्षिणासहितान्कलशान्दद्यात् ॥ तत्रमंत्रः ॥ मंगलःप्रतिगृह्णातिमंगलोवैददातिच ॥ मंगलस्तारकोभाभ्यांमंगलायनमोनमः ॥ इतिदत्त्वा आचार्यंरक्तवस्त्रादिनासंपूज्यतस्मैपीठंव्रतपूर्तयेरक्तांसुरभिंरक्तवृषभंचदत्त्वा विभवेसतिसोपस्करांशय्यांचदत्त्वा सदन्नेनब्राह्मणान्संतर्प्यदक्षिणादिभिःप्रतोष्याशिषोगृहीत्वेष्टजनैःसहभुंजीत ॥ इतिभौमव्रतम् ॥ अथशनैश्चरव्रतं स्कांदे ॥ तच्चश्रावणशुक्लपक्षाद्यशनिवारे ॥ तत्रविधिः ॥ प्रातः शमीकाष्ठेनदंतान्विशोध्यनद्यादौस्नात्वानित्यकर्मनिर्वर्त्यपूजासामग्रीमादाय शमीमूलंतदभावेऽश्वत्थमूलंगत्वा तत्रमृदावेदिकांविधायतत्रधनुष्याकारंमंडलंविलिख्य तत्रकृष्णायसनिर्मितांमहिषासनांद्विभुजांदंडपाशधरांशनैश्चरमूर्तिंविधायकृष्णवस्त्रवेष्टितांचकृत्वाएवंपीठपूर्विकांसंपाद्यसंकल्पंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यात्मनोऽखिलदुःखदौर्भाग्यनिरसनपूर्वकमिहजन्मनिजन्मांतरेचातुलसुखपुत्रपौत्रधनधान्याद्यभिवृद्ध्यर्थंशनैश्चरव्रतंकरिष्ये ॥ गणेशपूजनादिविधायपूजामारभेत । तत्रादौप्राणप्रतिष्ठांकृत्वाध्यायेत् ॥ शनैश्चरंदीर्घदेहंदंडपाशधरंतथा ॥ पिंगाक्षंस्थूलदेहंचध्यायामिरविनंदनम् ॥ इतिध्यात्वा शमग्निरग्निभिरितिवैदिकेनशनैश्चरायनमइतिनाममंत्रेणवापूजयेत् ॥ तिलतैलेनपुरुषसूक्तेनतत्सूक्तेनचाभिषेकंकुर्यात् ॥

कृष्णवस्त्रेणसप्ततंतुभिश्चवेष्टयेत् ॥ एवंषोडशोपचारैः संपूज्यसप्तप्रदक्षिणाःसप्तनमस्कारान्कृत्वास्तुवीत ॥ नमःकृष्णायनीलायश्वेत कंठनिभायच ॥ नमश्चर्षणगात्रायस्थूलरोम्णेनमोनमः ॥ तपसादग्धदेहायनित्यंयोगधरायच ॥ नमस्तेज्ञाननेत्रायकाश्यपायार्कसून वे ॥ इतिस्तुत्वाततोविप्रंसंपूज्यप्रस्थतिलानांवायनंसदक्षिणंदत्त्वादेवंविसृज्यगृहमागत्यतिलपिष्टविमिश्रितान्नंब्राह्मणायदत्त्वास्वयंतथै वभुंजीत ॥ एवंप्रकारेणत्रयस्त्रिंशच्छनिवासरपर्यन्तंप्रतिशनिवारंकर्तव्यम् ॥ असामर्थ्येतु श्रावणशनिवासरेषुकर्तव्यम् ॥ एवंचरि त्वांतेउद्यापनंकुर्यात् । पूर्वसंकल्पमुक्त्वाशनैश्चरव्रतोद्यापनंकरिष्ये ॥ इतिसंकल्प्य वृताचार्यउद्यापनविधिनाकलशप्रतिष्ठांतंकृत्वा तत्रसुवर्णशमीपत्रेहैमंद्विभुजंशनैश्चरमुक्तविधिनाप्रतिष्ठाप्यसप्ततंतुमितंरुक्मोत्तरीयंकृष्णवस्त्रसप्तकंचसमर्प्यपूजयेत्॥ततोग्निंप्रतिष्ठाप्या न्वादध्यात् ॥ अत्रप्रधानं शनैश्चरंशमीसमित्तिलाज्यद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्याय क्ष्ये ॥ ततःसप्तद्विजान्संपूज्यतेभ्योदक्षिणायुतानि सप्ततिलपात्राणिदत्त्वा आचार्यायपीठंगांचदत्त्वा तिलमिश्रपक्वान्नेनभूदेवान्संतर्प्य आशिषोगृहीत्वास्वयंभुंजीत ॥ इतिशनैश्चरव्रतम् । अथशनिरोहिणीव्रतं भविष्ये ॥ तच्चज्येष्ठशुक्लप्रतिपदियदाशनिवासरोरोहिणी नक्षत्रंचतदाकर्तव्यम् ॥ तिथ्यादिसंकीर्त्यममइहजन्मनिजन्मांतरेचव्याधिभयदारिद्र्यादिसर्वदुःखनाशनपूर्वकदीर्घायुर्विपुलपुत्रपौत्रा द्यभिवृद्धिद्वारास्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयाद्यभीष्टसिद्ध्यर्थंशनैश्चरप्रीत्यर्थंशनिरोहिणीव्रतंकरिष्येइतिसंकल्प्य गणेशपूजनादि विधाय सुवर्णादिगुटिकायां रोहिणीसहितंशनैश्चरं लौहं शमाग्निरितिमंत्रेण प्रतिष्ठाप्यवक्ष्यमाणप्रकारेणपूजयेत् ॥ तत्रादौध्यानम् ॥ नीलांजनसमाभासंरविपुत्रंयमाग्रजम् ॥ छायामार्तण्डसंभूतंनीलांबरधरंविभुम् ॥ चतुर्भुजंमंदगतिंशूलिनंगृध्रसंस्थितम् ॥ किरीटिनं

धनुष्मंतंचिंतयामिशनैश्वरम् ॥ इतिध्यात्वाशमग्निरितिमंत्रंप्रत्युपचारंपठित्वापूजयेत् ॥ सूर्यपुत्राय० आवाहनं० शनैश्वराय० आसनं० पंगुशरीराय० पाद्यं० अर्कनंदनाय० अर्घ्यं० यमाग्रजाय० आचमनीयं० छायासुताय० स्नानं० क्रोधमुखाय० वस्त्रं० अंतकाय० उपवीतं० कृष्णाय० गंधं० रुद्राय० पुष्पं० बभ्रुमुखाय० धूपं० पिंगललोचनाय० दीपं० काश्यपाय० नैवेद्यं० यमाग्रजाय० तांबूलं० नीलांजनसमप्रभाय० दक्षिणां० भास्करनंदनाय० नमस्कारं० एवंसंपूज्य ततास्तिलानांवायनंदत्त्वादेवंलोहंसदक्षिणंविप्रायदत्त्वा सुवर्णगुटिकांरहसिधृत्त्वा ब्राह्मणभोजनपुरःसरंतिलमिश्रितपक्वान्नंस्वयंभुंजीत ॥ एवंप्रतिरोहिणीसप्तकपर्यंतंकर्तव्यं प्रतिरोहिण्यामेकोत्तरवारवृद्ध्यागुटिकावृद्धिःकर्तव्या॥ एवंचरित्वाष्टम्यांरोहिण्यामुद्यापनंकुर्यात्॥ पूर्वसंकल्पमुक्त्वा उद्यापनंकरिष्यइतिसंकल्प्यवृताचार्यःसर्वतोभद्रस्थकलशेएकोत्तरवारवृद्ध्यासंपादितसुवर्णगुटिकासुहैमंरोहिणीसहितंशनैश्वरंपूर्ववत्संस्थाप्यपूजयेत्॥ अग्निंप्रतिष्ठाप्यान्वादध्यात्। अत्रप्रधानंरोहिणीसहितशनैश्वरंशमीसमित्पायसाज्यतिलद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाऽऽज्याहुत्यायक्ष्ये॥होममंत्रस्तु॥ अनृणेतिमंत्रस्य विश्वेदेवाऋषयःकल्पोक्तदेवता त्रिष्टुप्छंदःहवनेविनियोगः ॐअनृणास्मिन्निति० एवं होमंसंपाद्यसप्तद्विजान्संपूज्य तेभ्योदक्षिणासहितांस्तिलपूरितकरकान्दत्त्वा आचार्यायशनिप्रतिमांकृष्णांगांचदत्त्वा ब्राह्मणभोजनपुरःसरंस्वयंभुंजीत ॥ एकोत्तरवारवृद्ध्यासंपादितगुटिकासुवर्णस्यअंगुलीयकंकृत्वायावज्जीवंधारयेत् ॥ एवंकृतेसर्वपीडानिरसनपूर्वकसर्वमनोरथावाप्तिर्भवति॥इतिश्रीमच्चित्त०व्रतोद्यापनकौमुद्यांवारव्रतानिसमाप्तानि॥अथसंक्रांतिव्रतानि ॥ तत्रादौधान्यसंक्रांतिव्रतं हेमाद्रौस्कांदे। इदंव्रतंमेएकवर्षात्मकम्। तत्रग्रहणविधिः। अयनसंक्रांतौविषुवसंक्रांतौवाव्रतग्रहणम् ॥

क्रांतिंदिनेप्रातः शुक्लतिलैर्नद्यांस्नात्वागोमयोपलिप्तशुद्धदेशेकुंकुमादिनाष्टदलंविरच्यपूजासामग्रींसंपाद्यसंकल्पंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यममाग्निष्टोमादिफलप्राप्तिपूर्वकसततजन्मधनधान्यपुत्रादिसमन्वितानिर्व्याधिसुरूपत्वादिसिद्धिद्वाराश्रीसावितृरूपीपरमेश्वरप्रीत्यर्थंधान्यसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य गणेशंसंपूज्यपूर्वनिर्मितपद्मकर्णिकायां विश्वात्मनेनमइतिनाममंत्रेणआवाह्यपूर्वाद्यष्टपत्रेषु क्रमेणदेवताः आवाहयेत् । भास्वरं १ रविं २ विवस्वंतं ३ पूषणम् ४ आदित्यं ५ तपनं ६ मार्तण्डं ७ भानुम् ८ एवमावाह्यपूजयेत् ॥ अर्घ्यमंत्रः ॥ कालात्मन्सर्वदेवात्मन्वेदात्मन्विश्वतोमुख ॥ व्याधिमृत्युजराशोकसंसारभयनाशन ॥ ततःप्रस्थपरिमितंधान्यंसदक्षिणाकंब्राह्मणायदत्त्वाआशिषोगृहीत्वामौनेनस्वयंभुंजीत॥एवंप्रतिसंक्रांतौ । संवत्सरांतेउद्यापनंकुर्यात्।मंडलेपूर्वोक्तप्रकारेण देवताआवाह्यसुवर्णनिर्मिताघ्र्यपात्रेणार्घ्यंदत्त्वासंपूज्य द्रोणपरिमितंतदर्द्धंतदर्द्धंवाधान्यमाचार्यायपीठसहितंदत्त्वाब्राह्मणान्संभोज्यस्वयंभुंजीत ॥ इतिधान्यसंक्रांतिव्रतम् ॥ अथलवणसंक्रांतिव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्यअनेकविधसुखप्राप्तिपूर्वकसूर्यलोकप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थंलवणसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पूर्ववत्पद्मेभास्करंसंपूज्यतदग्रेसगुडंलवणपात्रंनिधायदेवंप्रार्थयेत् ॥ पूजितस्त्वंयथाशक्तिप्रसीदममभास्कर ॥ व्रतंसंपूर्णतांयातुत्वत्प्रसादाद्दिवाकर ॥ ततःसगुडंलवणंदक्षिणायुतंदत्त्वागांचब्राह्मणायदत्त्वास्वयंभुंजीत ॥ वत्सरांतेपूर्ववन्मंडलेसौवर्णंभानुंसंपूज्यसुवर्णनिर्मितकमलयुतं द्रोणपरिमितंलवणंदक्षिणायुतंदत्त्वागांचदत्त्वा ब्राह्मणान्भोजयेत् ॥ इतिलवणसंक्रांतिव्रतम् ॥ अथभोगसंक्रांतिव्रतम् स्कांदे ॥ तिथ्यादिसंकीर्त्यआत्मनोऽनेकविधभोगप्राप्तिपूर्वकश्रीपरमेश्वरप्रीत्यर्थंभोगसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पूर्ववत्पद्मेभानुंसंपूज्यत्रिभ्योऽधिकानिमिथुनानिसंपूज्य तेभ्योवायनानिकुंकुमकज्जल

सिंदूरसुगंधिपुष्पतांबूलशालितंडुलदक्षिणायुतानिदत्त्वाभुंजीत ॥ संवत्सरांतेमंडलेसौवर्णंभानुंसंपूज्यद्वादशमिथुनेभ्यः पूर्वोक्तानिवस्त्र युग्मसहितानिवायनानिदत्त्वागांचदत्त्वाब्राह्मणान्भोजयेत् ॥ इतिभोगसंक्रांतिव्रतम् ॥ अथरूपसंक्रांतिव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्य ममकमनीयरूपप्राप्तिपूर्वकश्रीपरमेश्वरप्रीत्यर्थंरूपसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य ॥ पद्मेपूर्ववद्भानुंसंपूज्यकांस्यपात्रस्थघृतेरूपंवी क्ष्यदद्यात् ॥ वत्सरांतेमंडलेसौवर्णंभानुंसंपूज्यहोमपात्रस्थघृतंहिरण्यसहितंदत्त्वागांच फलभूयस्त्वकामोघृतधेनुमपिदत्त्वाब्राह्मणान्भो जयेत् ॥ इतिसुरूपसंक्रांतिव्रतम् ॥ अथतेजःसंक्रांतिव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्य । आत्मनोतितेजस्त्वप्राप्तिकामनया श्री सवितृप्रीत्यर्थंतेजःसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पूर्ववत्पद्मेसवितारंसंपूज्यतत्पुरतःशालितंडुलपूर्णंकरकंसंस्थाप्यतन्मध्ये मोदकंतदुपरिदीपंज्वलंतंकृत्वाब्राह्मणंसंपूज्यतस्मैदद्यात् ॥ संवत्सरांतेमंडलेसौवर्णंभानुंसंपूज्यतदुत्तरतःशालितंडुलपूर्णंताम्रकल शेसुवर्णनिर्मितंदीपंकृत्वाब्राह्मणायदत्त्वागांकपिलांचदत्त्वाद्विजान्भोजयेत् ॥ इतितेजःसंक्रांतिव्रतम् ॥ अथसौभाग्यसंक्रांतिव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्यात्मनोऽनुपमसौभाग्यप्राप्तिपूर्वकभानुप्रीत्यर्थंसौभाग्यसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पूर्व वत्पद्मेभानुंसंपूज्यसपत्नीकायद्विजायसौभाग्याष्टकयुतंवस्त्रयुग्मसहितंवायनंचदत्त्वाऽलवणंमौनीभुंजीत ॥ वत्सरांतेमंडलेभानुंसं पूज्यतत्पुरतोयथाशक्तिलवणाचलंकृत्वातदुपरिकांचनकमलंकृत्वातस्मिन्संपूज्यसुरभिसहितंविप्रायप्रतिपादयेत् ॥ सौभाग्याष्टकंतु । ऐक्षवंराजिकास्तद्वन्निष्पावाश्चसुशोभनाः ॥ धान्यकंजीरकंचैवकौसुंभंकुसुमंतथा ॥ लवणंचाष्टमंतद्वत्सौभाग्याष्टकमुच्यते ॥ इतिसौभाग्यसंक्रांतिव्रतम् ॥ अथतांबूलसंक्रांतिव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्यआत्मनोभर्त्रासह अतुलसुखप्राप्तिपूर्वकस

वितृप्रीत्यर्थंतांबूलसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पूर्ववद्ब्रह्मादीनुसंपूज्यततोदंपतीचंदनादिनासंपूज्यतयोःसोपस्करंतांबूलंदद्यात् ॥ एवंप्रतिदिनंसंवत्सरपर्यन्तम् । अंतेमंडलेपूर्ववद्ब्रह्मादीनुसंपूज्यदंपतीसंपूज्यताभ्यामेलालवंगजातीफलकंकोलजातीपत्रखादिरादिप्रत्ये कंभांडेनिधायरौप्यमयंचूर्णपात्रंपूगप्रस्फोटनंचपूगीफलानिनागवल्लीदलानिचसातिसामर्थ्येसुवर्णनिर्मितानिकानिचिन्नागवल्लीदलानिच रौप्यादिमयेपात्रेनिधायसंकल्पपूर्वकंदद्यात् ॥ तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकम् ॥ अस्यप्रदानाद्देवेशपूर्णाःसंतुमनोरथाः ॥ इतिदत्त्वागांचदत्त्वा ब्राह्मणान्भोजयेत् ॥ इतितांबूलसंक्रांतिव्रतम् ॥ अथप्रकारांतरेणतांबूलव्रतं भविष्ये ॥ तत्रग्रहणं यदा आषाढशुक्लप्रतिपदिशशिनक्षत्रंतदाग्राह्यम् ॥ अथाषाढशुक्लदशम्यांचातुर्मास्यव्रतम् । तिथ्यादिसंकीर्त्यममतांबूलव्रतकल्पोक्तफलावाप्तयेमहाविष्णुप्रीत्यर्थंतांबूलव्रतंकरिष्ये ॥ पीठेफणान्वितशेषनागकन्यायुतंहरिंपुरुषसूक्तेनसंपूज्यतदग्रेसपत्नीकंद्विजंसंपूज्यसोपस्करंतांबूलवीटीद्वयंदेवायद्विजायचदत्त्वानमेत् ॥ अंतेकार्तिकशुक्लैकादश्यांपौर्णमास्यांवाउद्यापनंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यात्मनोनेकदानफलप्राप्तिपूर्वकविष्णुलोकप्राप्तिद्वाराश्रीशेषपर्यंकशायिनागकन्यायुतनारायणप्रीत्यर्थमाचरितंयत्तांबूलव्रतंतत्सं पूर्णफलावाप्तयेतांबूलव्रतोद्यापनंकरिष्ये इतिसंकल्प्य गणेशपूजनादिविधायआचार्यंवृणुयात् । वृताचार्यःपूर्ववन्मंडलेब्रह्मादिदेवताःसंस्थाप्य तदुपरिकलशेरौप्यमयेशेषेहाटकनिर्मितनारायणंनागकन्यायुतंसहस्रशीर्षेतिमंत्रेणसंस्थाप्यपरितःपूर्वादिदिक्षुब्रह्माणमीशानंदुर्गांक्षेत्राधिपतिंचतत्तन्मंत्रैरावाह्यपुरुषसूक्तेनपंचामृताभिषेकपुरःसरंपूजयेत् ॥ नानाविधभक्ष्यभोज्ययुतपायसोपहारंनिवेदयेत् । देवाग्रेद्रोणसंख्यापूगानियथाशक्तिवानागपर्णायुतंसंस्थाप्यदेवंस्तोत्रैःस्तुवीत ततोदशनववाताम्रपात्राणिकुंभान्वापूगयुतानिरौ

प्यमयानितावंतिचूर्णपात्राणितथातीक्ष्णानिपूगप्रस्फोटनानितथासुवर्णनिर्मितानिकानिचिन्नागवल्लीपत्राणितथाएलालवंगादिमुखवास द्रव्याणांपात्राणिरौप्यमयानितत्तद्द्रव्यपूरितानिचनवशूर्पनवकेनिधायवस्त्रद्वयेनसंवेष्ट्यसप्तधान्योपरिदेवाग्रेनिधायतत्रनागरूपंध्यायेत्पू जयेत्प्रार्थयेच्च ॥ नवनागमहाराजवल्ल्यातवप्रपूजनात् ॥ ईप्सितंदेहिमेशीघ्रंसर्वसौख्यंसदाप्रभो ॥ ततोगीतवादित्रपुराणपठना दिनाशात्रिंनिनयेत् ॥ प्रातर्देवंसंपूज्याग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं नारायणमतोदेवाइतिमंत्रेणखंडमिश्रितपायसाज्यद्रव्ये णअष्टोत्तरसहस्रसंख्याकाहुतिभिः तथासमस्तव्याहृतिमंत्रेणपलाशसमित्तिलव्रीहिद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिर्ब्रह्माद्याव रणदेवताःपायससमित्तिलव्रीहिद्रव्यैः॥अष्टाविंशतिसंख्याकाहुतिभिःमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यदंपतिनवकं वस्त्रादिनासंपूज्यपूर्वस्थापितशूर्पनवकंतेभ्योदद्यात् ॥ तत्रमंत्रः ॥ तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकम् ॥ अस्यप्रदानाद्देवे शसफलंमेभिकांक्षितम् ॥ ततस्तेभ्योनवगोदानानितदभावेतन्मौल्यंवादक्षिणात्वेनदत्त्वादेवंप्रार्थयेत् ॥ तांबूलदानमाहात्म्यात्प्रीतो भवजनार्दन ॥ संपूर्णंकुरुमेदेवकांक्षितंपुरुषोत्तम ॥ ततःपीठमाचार्यायदत्त्वाकपिलांगांचदत्त्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत ॥ इतितांबूलव्रतम् ॥ अथविशोकसंक्रांतिव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्यआत्मनोविशोकसमान्वितपुत्रपौत्रादिवृद्धिद्वारास वितृप्रीत्यर्थंविशोकसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पद्मेपूर्ववद्धानुंताम्रपात्रेसंपूज्यरक्तवस्त्राभ्यांपरिधायपूर्ववदर्घ्यंदत्त्वाब्राह्मणा यगुडपूर्णकुंभंसदक्षिणाकंदद्यात् ॥ वत्सरांतेमंडलेहैमंभास्करंसंपूज्यगुडपर्वतेनसहपीठंकपिलासहितंदद्यात् ॥ इतिविशोकसं क्रांतिव्रतम् ॥ अथआयुःसंक्रांतिव्रतं स्कांदे ॥ तिथ्यादिसंकीर्त्य आत्मनोदीर्घायुस्तेजस्त्वपूर्वकापमृत्युराहित्यकामनयास

पितृप्रीत्यर्थमायुःसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पद्मेपूर्ववद्भानुंसंपूज्यब्राह्मणायकांस्यपात्रस्थितंगोघृतंदद्यात् ॥ वत्सरांतेमं
डलेहैमंभानुंपूर्ववत्संपूज्यद्वात्रिंशत्पलमितेकांस्यपात्रेगोघृतंनिधायहिरण्यंब्राह्मणायदद्यात् ॥ तत्रमंत्रः ॥ कांस्यपात्रस्थितं
गव्यमायुरारोग्यकारकम् ॥ सहिरण्यंददाम्येवंव्रतसंपूर्तिहेतवे ॥ ततःकपिलांगांदत्त्वाद्विजान्भोजयेत् ॥ इत्यायुःसंक्रांतिव्रतम् ॥
अथधनसंक्रांतिव्रतं हेमाद्रौ स्कांदे ॥ तिथ्यादिसंकीर्त्यआत्मनोविपुलधनप्राप्तिपूर्वकायुरारोग्यपुत्रपौत्रादिप्राप्तिकामनयासवि
तृप्रीत्यर्थधनसंक्रांतिव्रतंकरिष्ये ॥ इतिसंकल्प्य पद्मेवारिपूर्णकलशंनिधायतत्रसुवर्णपात्रेभास्करंसंपूज्यसहिरण्यंकलशंद्विजायदद्या
त् ॥ एवंप्रतिमासं वत्सरांतेपूर्ववन्मंडलेयथाशक्तिघटितसुवर्णकलशेपद्महस्तंहैमंभानुंसंपूज्यसुवर्णधेनुसहितंपीठंद्विजायदत्त्वास
दन्नेनद्विजान्भोजयेत् ॥ सर्वसंक्रांतिव्रतेष्वितिकर्त्तव्यताधान्यसंक्रांतिवज्ज्ञातव्या ॥ इतिधनसंक्रांतिव्रतम् ॥ इतिश्रीमच्चि०व्रतोद्या
पनकौमुद्यांसंक्रांतिव्रतानिसमाप्तानि ॥ अथव्यतीपातयोगव्रतं वाराहे ॥ तत्रव्रतग्रहणविधिः ॥ मार्गशीर्षादिशुभमासेयदाव्यतीपात
योगस्तद्दिनेनद्यादौप्रातःस्नात्वापावमानीर्जप्त्वासंकल्पंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यआत्मनोनिरतिशयैहिकसुखप्राप्तिसकल
पापक्षयपूर्वकदिव्यविमानारूढगीतनृत्यविलास्यप्सरोगणवीज्यमानसकलभोगयुतकल्पकोटिसूर्यलोकनिवासोत्तरपुत्रपौत्रादिसकलसं
पत्सहितमहैश्वर्यादिगुणयुक्तराजराजत्वकामोऽमुककामोवाव्यतीपातयोगव्रतंकरिष्ये ॥ इतिसंकल्प्य गणेशपूजनादिनिर्वर्त्यशुद्धभूमौपं
चरंगोपेतकमलेकलशस्थापनप्रकारेणशर्करापूरितताम्रकलशंप्रतिष्ठाप्यतत्रताम्रमयेपूर्णपात्रेकांचनाब्जे अष्टादशभुजंकांचनव्यतीपात ॥ ६१ ॥
विग्रहंनाममंत्रेणप्रतिष्ठाप्यपूजयेत् । ततःपंचरत्नान्वितपुष्पांजलिंदद्यात् ॥ तत्रमंत्रः ॥ नमस्तेस्तुव्यतीपातसोमसूर्यसुतप्रभो ॥ यद्वा

नादिव्रतंकिंचित्तदनंतमिहास्तुमे ॥ इतिदत्त्वायथाशक्तिसुवर्णादिदत्त्वापुराणपठनादिनारात्रिंनिनयेत् ॥ तद्दिनेउपवासः ॥ प्रातःदेवंसं
पूज्यसपत्नीकंद्विजंचसंपूज्यतत्पीठंसुवर्णसहितंतस्मैदत्त्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत ॥ कुर्यादेवंमासिमासिव्यतीपातांस्त्रयोदश॥
चतुर्दशेव्यतीपातेकुर्यादुद्यापनंशुभम् ॥ पूर्वोक्तसंकल्पांतेआचरितस्यव्यतीपातव्रतस्यसांगतासिद्ध्येतदुद्यापनाख्यंकर्मकरिष्ये ॥
इतिसंकल्प्य वृताचार्यः सर्वतोभद्रस्थशर्करापूरितकलशेताम्रमयंपूर्णपात्रंनिधाय तत्रसुवर्णपद्मेअष्टादशभुजंव्यतीपातविग्रहंसौवर्णंसंपू
ज्यपूर्ववत्पुष्पांजलिंदत्त्वारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं देवंव्यतीपातंक्षीरवृक्षसमिदा
ज्यपयःफलद्रव्यचतुष्टयेनप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततआचार्यंसंपूज्यतस्मैसो
पस्करांशय्यांपीठंचदद्यात् ॥ तत्रमंत्रः ॥ वंदेव्यतीपातमहंमहांतंरवींदुसूनुंसकलेष्टसिद्ध्यै ॥ समस्तपापस्यममक्षयोऽस्तुपुण्यस्य
वृद्धिर्ममसर्वदास्तु ॥ इतिस्तुत्वाशय्यादिसहितंपीठंव्रतपूर्तयेगांचदत्त्वाब्राह्मणान्भोजयेदिति ॥ इतिव्यतीपातव्रतम् ॥ अथप्रकारां
तरेणनारदीयपुराणोक्तव्यतीपातव्रतम् ॥ तिथ्यादिसंकीर्त्यममसकलपापक्षयपूर्वकाभीष्टसिद्ध्यनंतरविष्णुसायुज्यकामोव्यतीपातव्रतं
करिष्ये ॥ इतिसंकल्प्य व्यतीपातदिनेप्रातःपंचरंगोपेतपद्मेगोक्षीरपूरितंकांस्यभाजनेचतुर्भुजंचक्राद्यायुधोपेतंसौवर्णपद्महस्तंलक्ष्म्या
न्वितंविष्णुंविष्णोरराटमसीतिमंत्रेणसंस्थाप्यजातीपुष्पादिनापुरुषसूक्तेनसंपूज्यशर्करोपेतपायसोपहारंनिवेद्यदेवंप्रार्थयेत् ॥ व्यतीपात
दिनेदेवतवसर्वंसमर्पितम् ॥ भवत्वनंतफलदंममजन्मनिजन्मनि ॥ ततोद्विजंसंपूज्यतिलपूर्णशरावंसगुडंससुवर्णंदत्त्वासोपस्करांशय्यां
पीठंगांचदत्त्वाब्राह्मणान्भोजयेदिति ॥ इतिव्रतोद्यापनकौमुद्यांव्यतीपातव्रतम् ॥ अथलक्षपूजाविधानम्॥ तत्रादौशिवलक्षपूजाविधिर्ब्रह्मां

डपुराणे ॥ माघादिपुण्यमासेषुचातुर्मास्येवाश्रावणेविशेषेणचंद्रानुकूल्येशुभेदिनेप्रातःनद्यादौस्नात्वानित्यकर्मनिर्वर्त्यदेवागारंप्रविश्य
तिथ्यादिसंकीर्त्य अखिलपापक्षयपूर्वकैहिकामुष्मिकनिरवधिसुखप्राप्तिद्वाराऽमुककामनयावाउमासहितसदाशिवप्रीत्यर्थममुकलक्षपू
जांकरिष्ये ॥ इतिसंकल्प्य ॥ पीठेशिवंसंपूज्यसहस्रनामभिःमूलमंत्रेणवातद्द्रव्येणपूजयेत् ॥ प्रत्यहंपंचामृताभिषेकः कर्पूरारार्तिक्यं
दध्योदनोपहारश्चप्रथमदिनेयावतीसंख्यातावतीसमाप्तिपर्यंतमयुतांतेसुवर्णपुष्पमभावेलक्षांतेसमाप्तिंदिनेविशेषेणशिवंसंपूज्यशतपलप
रिमितेनपंचामृतेनस्नानं नालिकेरार्घ्यं शिवोपरिध्वजपताकारोपणंश्वेतवस्त्रद्वयदानंच ततःपुष्पांजलित्रयमष्टभिर्नामभिः भवाय० श
र्वाय० रुद्राय० पशुपतये० उग्राय० महते० भीमाय० ईशानाय० इतिदत्त्वाप्रार्थयेत्॥विरूपाक्षमहेशानविश्वरूपमहेश्वर॥मयाकृतां
लक्षपूजांगृहीत्वावरदोभव॥ ततोनमेत् ॥ मृत्युंजयाययज्ञायदेवदेवायशंभवे ॥ आश्रितेशायशर्वायमहादेवायतेनमः ॥ नमःशिवाय
शांतायसगणायसमूनवे ॥ सर्वेश्वरायदेवायकारणत्रयहेतवे ॥ ततोयथाशक्तिब्राह्मणान्भोजयेदिति । व्रतपूर्तयेगांचदद्यात्पूजाद्र
व्याणिच चंपकैर्मल्लिकापुष्पैर्जातीकिंशुकपाटलैः ॥ द्रोणपुष्पैःकदंबैश्चबिल्वशाखादलैस्तथा ॥ नागवल्लीदलैर्वापिरत्नैर्नानाविधैरपि ॥
तत्तत्कालोद्भवैःपुष्पैःपल्लवैःकोमलैरपि ॥ धान्यैश्चविविधैःशुद्धैरखंडैर्व्रीहितंडुलैः ॥ लक्षपूजांप्रकुर्वीतनामभिर्मूलमंत्रतः ॥ इति
लक्षपूजा ॥ अथप्रकारांतरेणशिवलक्षपूजाविधानमग्निपुराणे ॥ पूर्ववद्देवंसंपूज्यसहस्रनामभिः ॐनमःशिवायेति वामंत्रेणपुष्पादिए
करूपतयासमाप्तिपर्यंतंसमर्प्यअंतेशुभदिनेउद्यापनंकुर्यात् ॥ तिथ्यादिसंकीर्त्यममानेकजन्मार्जितदुरितादिनिवृत्तिपूर्वकैहिकपुत्र
पौत्रादिविविधसुखप्राप्त्यनंतरशिवलोकनिवासकामनयाकृतंयल्लक्षपूजाविधानंतत्संपूर्णफलावाप्तये तदुद्यापनाख्यंकर्मकरिष्ये ॥ यद

र्पितंतदुल्लेखःसंकल्पेकार्यः ॥ ततोवृताचार्यो वेदिकालिंगतोभद्रस्थकलशेधान्यपूरितपूर्णपात्रेमध्येसौवर्णंमहेशं नमःशंभवेचमयोभ
वेचेतिमंत्रेणसंस्थाप्यतद्वामभागेसौवर्णांगौरींचगौरीर्मिमायेतिमंत्रेणसंस्थाप्यपुरतोराजतंवृषभमृषभंमेतिमंत्रेणसंस्थाप्यपरिवारदेवताः
स्थापयेत्पूर्वादिदिक्षु ॥ अधर्मं० अवैराग्यं० अनैश्वरं० महेश्वरं० तद्बहिः ऐशान्याम् ईशानवक्त्राय० पूर्वेतत्पुरुषवक्त्राय० दक्षिणे
अघोरवक्त्राय० पश्चिमेसद्योजातवक्त्राय० उत्तरेवामदेववक्त्राय० पुनःपूर्वादिषु वामायै० श्रेष्ठायै० काल्यै० उन्मन्यै० पुनः
पूर्वामारभ्यैशानीपर्यन्तम् अजैकपदे० अहिर्बुध्न्याय० भवाय० शर्वाय० उमापतये० रुद्राय० पशुपतये० शंभवे० वरदा
य० शिवाय० ईश्वराय० पुनःपूर्वे नंदिकालौ० दक्षिणेभृंगिचंडौ० पश्चिमेवृषस्कंदौ० उत्तरेदेशकालौ० ततइंद्रादिलोकेशाने
वंसंस्थाप्यपूजयेत् ॥ ध्यानम् ॥ शुद्धस्फटिकसंकाशंत्रिनेत्रंचंद्रशेखरम् ॥ भस्मोद्धूलितसर्वांगंहृच्चिंत्यंभक्तवत्सलम् ॥ स्था
पनमंत्रेणपूजयेत् ॥ दशैकंवासुवर्णपुष्पंसमर्प्य नमःशिवायेतिनमस्कारःपुराणपठनादिनारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वाद
ध्यात ॥ प्रधानंदेवंसोमंमहेशंतिलद्रव्येणायुतसंख्याकाहुतिभिःसहस्रपरिमिताभिर्वापरिवारदेवतामंडलदेवताश्चएकैकयातिलाहुत्या
ज्याहुत्यायक्ष्ये ॥ स्थापनमंत्रेणहोमः पुष्पाद्यर्पणमंत्रेणवाहोमांतेआचार्यंसंपूज्यपीठंगोमिथुनंचप्रतिपाद्यअधिकफलप्राप्तये सोपस्क
रांशय्यांचदत्त्वाशोडशद्विजान्विशेषसत्कारेणसंपूज्यदक्षिणांचदत्त्वासदन्नेनद्विजान्संतर्प्यस्वयंभुञ्जीत ॥ इतिप्रकारांतरेणशिवलक्षपू
जाविधानम् ॥ अथविष्णुलक्षपूजाविधानमग्निपुराणे ॥ चातुर्मास्येतुसंप्राप्तेलक्षपूजांसमाचरेत् ॥ माघादिपुण्यमासेषुलक्षपूजाहरेःस्मृ
ता ॥ यद्यद्दतोभवेत्पुष्पंविष्णवेतत्तदर्पयेत् ॥ अतसीतुलसीधात्रीपद्मंदूर्वांकुरास्तथा ॥ करवीरंकर्णिकारंशतपत्रंचकेतकम् ॥ चंप

कंमोगरंचैवसौवीरंकनकंतथा ॥ जातीपुष्पंपाटलकंपुन्नागंचकदंबकम् ॥ बादरंचामरंपूगंफलैरन्यैश्चपूजयेत् ॥ सुगंधैर्ऋतुसंभूतैःश
स्तैःपादपपल्लवैः ॥ इति ॥ यद्यत्पूजयतेपुष्पंतत्स्वरूपंहिरण्मयम् ॥ कारयेच्छतकेचैकंसहस्रेवापिकारयेत् ॥ लक्षेवादापयेद्धीमान्य
थावित्तानुसारतः ॥ विष्णोर्नामसहस्रेणगायत्र्यामूलमंत्रतः ॥ सहस्रंद्विसहस्रंवात्रिसहस्रंयथाविधि ॥ उपक्रमदिनेयावत्प्रत्यहंताव
तीभवेत् ॥ इति ॥ तिथ्यादिसंकीर्त्य अखिलनानाविधपातकशमनपूर्वकैहिकामुष्मिकनिरतिशयानंदप्राप्तिद्वारालक्ष्मीनारायणप्रीत्य
र्थंतुलस्यादिलक्षपूजांकरिष्ये ॥ इतिसंकल्प्य पीठेपुरुषसूक्तेनदेवंसंपूज्यनामभिस्तुलस्याद्यर्पयेत् ॥ समाप्तावुद्यापनंकुर्यात् ॥
पूर्वसंकल्पांतेअमुकलक्षपूजोद्यापनंकरिष्ये ॥ इतिसंकल्प्य सायंवृताचार्यः वेदिकायांसर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्रति
ष्ठाप्यतत्रदेवंपूजयेत् ॥ तत्रायंक्रमः ॥ सर्वतोभद्रेब्रह्मादिदेवताःसंस्थाप्य तदुपरिप्रस्थतिलपुंजं तदुपरिप्रस्थगोधूमपुंजं तदुपरि
प्रस्थपरिमितशुद्धतंडुलपुंजंकृत्वातत्रकुंकुमेनाष्टदलपद्मंविरच्यतन्मध्येताम्रमयेपिधानसहितंताम्रकलशंप्रतिष्ठाप्यतत्रसौवर्णंचतुर्भुजंल
क्ष्म्यालिंगितवामांगंनारायणंसहस्रशीर्षेतिमंत्रेणसंस्थाप्यपुरतः सौवर्णंराजतंवागरुडम् ॥ सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः ॥ विष
पापहरोनित्यमतः शांतिंप्रयच्छमे ॥ इति ततऐशान्यांविदिक्षुशंखंचक्रंगदांपद्मंचततः परितोलोकेशान्संस्थाप्यपूजयेत् ॥ प्रातर
ग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानंलक्ष्मीनारायणम् ॐ नमोनारायणायेतिमंत्रेणमधुलाजमिश्रिततिलपायसघृतचरुद्रव्यचतु
ष्टयेनप्रतिद्रव्यमष्टोत्तरसहस्राहुतिभिरष्टोत्तरशताहुतिभिर्वातथाचतुष्टयेनअयुताहुतिभिःसहस्राहुतिभिर्वासहस्रनाममंत्रैर्यक्ष्ये परिवा
रदेवतामंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ तत आचार्यायपीठमनेनमंत्रेणदद्यात् ॥ जलशायीब्रह्मपितायद्गर्भेसचराचरम् ॥

अनंतभोगशयनःप्रीयतांमेजनार्दनः ॥ इतिदत्त्वागांपयस्विनींचदत्त्वाऽधिकफलप्राप्तयेसोपस्करांशय्यांचदत्त्वादशाधिकान्द्विजान्सद
न्नेनभोजयेदिति ॥ एवमेवविधानेनगणेशांबिकयोर्नृप ॥ तत्तन्मंत्रेणपूजातुतत्तन्नामसहस्रकैः ॥ गणेशेलड्डुकैर्होमंपंचखाद्यैरथा
पिवा ॥ पायसेनतुदेव्याश्चतिलैर्वाकेवलैरपि ॥ एवंकृत्वाविधानेनस्वर्गलोकेमहीयते ॥ इतिविष्णुलक्षपूजाविधानम् ॥ अथ
लक्षनमस्कारव्रतंभविष्ये ॥ वसिष्ठउवाच ॥ ब्रह्महत्यादिपापानांप्रायश्चित्तंयदीच्छसि ॥ तदालक्षनमस्कारव्रतंकुरुमही
पते ॥ चातुर्मास्येतुसंप्राप्तेकेशवेशयनंगते ॥ आषाढस्यसितेपक्षेएकादश्यांसमारभेत् ॥ कार्तिकस्यासितेपक्षेपौर्णमास्यांसमा
पयेत् ॥ मार्गशीर्षेमाघेचैत्रेवैशाखेवापूर्णिमायांसमापयेदिति ॥ तिथ्यादिसंकीर्त्य ममानेकजन्मोपार्जितनानाविधपातकशमन
पूर्वकातुलभोगप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविष्णोरमुकदेवस्येतिवालक्षनमस्कारव्रतमहंकरिष्ये ॥ इतिसंकल्प्य तुलस्यग्रेअ
श्वत्थमूलेगंगातीरेगवांगोष्ठेवाऽन्यत्रशुभस्थलेवायद्देवताप्रीतयेव्रतंतद्देवंपीठेपुरुषसूक्तेनसंपूज्य नमोस्त्वनंतायेतिस्तुत्वातद्देवताना
ममंत्रेणतद्देवताप्रकाशकवैदिकमंत्रेणमूलमंत्रेणवानमस्कारानष्टांगानेकरूपेणसमाप्तिपर्यंतंकुर्यात् ॥ समाप्तौउद्यापनंकुर्यात् ॥ पूर्वसं
कल्पांतेलक्षनमस्कारव्रतस्यसांगतासिद्ध्येतदुद्यापनंकरिष्ये ॥ इतिसंकल्प्य व्रताचार्यःसर्वतोभद्रेकलशोपरिहैमंदेवंतद्देवतानाममंत्रे
णसंस्थाप्यपूजयेत् ॥ विशेषार्घ्यंत्रयंदद्यात् ॥ देवदेवजगन्नाथसर्वक्रतुफलप्रद ॥ व्रतेनानेनसंतुष्टोगृहाणार्घ्यंमयार्पितम् ॥ इति
ततोग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानंदेवंविष्णुममुकंवासत्तावृत्त्यापौरुषेणचरुतिलव्रीहिपलाशसमित्सर्पिर्द्रव्यैः प्रतिद्रव्यंयक्ष्ये
ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचआचार्यायदत्त्वाष्टोत्तरशताधिकद्विजान्यथाशक्तिवाभोजयेदिति ॥ इतिलक्ष

नमस्कारव्रतम् ॥ अथलक्षप्रदक्षिणाविधानं विष्णुधर्मोत्तरे ॥ आषाढशुक्लपूर्णिमायांप्रारंभः कार्तिक्यांसमापनम् । अथवा शुभमासेवाप्रारंभसमापने । सुरालयेश्वत्थमूलेतुलस्यागोव्रजेऽथवा ॥ कुर्यात्प्रदक्षिणाःसर्वाःपूजयित्वायथाविधि ॥ तिथ्यादिसंकीर्त्यात्मनोऽखिलपापरोगपीडानिरसनपूर्वकाभीष्टसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविष्णोरमुकदेवस्येतिवालक्षप्रदक्षिणाव्रतंकरिष्ये ॥ इति संकल्प्य गणेशादिसंपूज्यपूजासामग्रींगृहीत्वाअश्वत्थादिसमीपंगत्वापुरुषसूक्तेनसंपूज्यसहस्रनामादिपठन्करचालनादिरहितएकाग्रचित्तःप्रदक्षिणाःएकरूपतयासमाप्तिपर्यंतंकुर्यात् ॥ अंतेउद्यापनंकुर्यात् ॥ अमुककामनयाकृताःप्रदक्षिणास्तत्साद्गुण्यार्थंतदुद्यापनंकरिष्ये ॥ इतिसंकल्प्य व्रताचार्यःसर्वतोभद्रेकलशोपरिहैमंकृतप्रदक्षिणंदेवंतत्तन्मंत्रेणसंपूज्यसाष्टांगंप्रणमेत् ॥ ततोग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानंदेवंविष्णुंविष्णुगायत्र्याष्टोत्तरशतसंख्ययाचर्वाज्याहुतिभिः ब्रह्मादिदेवताःएकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंकपिलां गांचदत्त्वायथाशक्तिब्राह्मणान्भोजयेत् ॥ अत्रयद्देवताकप्रदक्षिणास्तद्देवताप्रकाशकोमंत्रःपूजादौग्राह्यः ॥ इतिलक्षप्रदक्षिणाविधानम् ॥ अथप्रकारांतरेणाश्वत्थप्रदक्षिणाविधिर्भविष्ये ॥ संकल्पादिपूर्ववत् । इयान्विशेषः । आदावाराधयेद्विष्णुंध्यानावाहनपूर्वकम् ॥ तथैव पिप्पलतरुंनारायणस्वरूपिणम् ॥ अर्चयेत्पुरुषसूक्तेनउपचारैश्चषोडशैः ॥ ततःप्रदक्षिणंकुर्यात्तत्सर्वंसफलंभवेत् ॥ लक्षमेकंद्विलक्षंवात्रिचतुःपंचलक्षकम् ॥ कार्यस्यगौरवाज्ज्ञेयंद्वादशांतंसमाचरेत् ॥ ब्रह्मचारीहविष्याशीह्यधःशायीजितेंद्रियः ॥ मौनीध्यानपरोभूत्वापिप्पलस्यस्तुतिंपठेत् ॥ विष्णोर्नामसहस्रंचपौरुषंवैष्णवंतथा ॥ ततोलक्षदशांशेनसघृतंपायसंहुनेत् ॥ तर्पणंतद्दशांशेनभोजनंतद्दशांशतः ॥ होमादौविष्णुगायत्रीनामसहस्रंवाग्राह्यं होमांतेद्रोणपरिमिततिलपुंजोपरिपलादधिकरौप्यपीठोपरिसुवर्णादधिकहैममश्वत्थतरुंसंस्थाप्यश्वे

तवस्त्रेणसंछाद्यसंपूज्यचद्विजायदद्यात् ॥ तत्रमंत्रः ॥ पिप्पलोवृक्षराजेंद्रोह्यग्निगर्भस्त्वमेवच ॥ प्रभुर्वनस्पतीनांचपूर्वजन्मनियत्कृतम् ॥
अघौघंनाशयक्षिप्रंतवरूपप्रदानतः ॥ ततोद्विजंप्रार्थयेत् ॥ अमुंतरुंगृहाणत्वंविष्णुरूपंद्विजोत्तम ॥ स्वीकृत्यदुष्कृतंघोरंक्षिप्रंशांतिंप्रय
च्छमे ॥ व्रतपूर्तयेशुक्लांगांचदद्यादिति ॥ इत्यश्वत्थप्रदक्षिणाविधानम् ॥ इतिश्रीमच्चित्तपा० व्रतोद्यापनकौमुद्यांलक्षपूजालक्षनमस्कार
लक्षप्रदक्षिणाविधानंसमाप्तम्॥अथलक्षवर्तीव्रतम्॥ तत्रादावेकसूत्रवर्तिकाव्रतं वायुपुराणे॥श्रावणशुद्धप्रतिपदमारभ्यकार्तिकपौर्णमासी
पर्यन्तंप्रत्यहमेकंसहस्रवर्तिकोद्दीपनंकार्यमंतेउद्यापनम् ॥ अथवामाघेवैशाखपूर्णिमायाम् । एतेषामभावेशुभकालेकार्यम् ॥ तिथ्यादि
संकीर्त्यात्मनोरजःसंपर्कादिविविधपातकक्षयागम्यागमनकोटिनाशविविधैहिकपुत्रपौत्रादिसुखप्राप्तिपूर्वकविष्णुलोकप्राप्तिद्वाराश्रीपर
मेश्वरप्रीत्यर्थमाचरितंयल्लक्षवर्तीव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनाख्यंकर्मकरिष्ये ॥इतिसंकल्प्य वृताचार्यः सर्वतोभद्रेकलशंप्रतिष्ठा
प्यतन्मध्यदेशेइदंविष्णुरितिमंत्रेणहैमंश्रियासहितविष्णुंतद्दक्षिणेसावित्र्यासहितंब्रह्माणंब्रह्मजज्ञानमितिमंत्रेणविष्णोरुत्तरे उमासहितंशं
भुंनमःशंभवेचमयोभवेचेतिमंत्रेणइतिदेवतात्रयंसंस्थाप्यपुरतोराजतंगरुडंप्रतिष्ठाप्यपूजयेत् ॥ चंदनानंतरमंगपूजा ॥ कालायनमः
शिरःपू० विष्णवे० ललाटं० वह्नये० नेत्रे० रवये० कर्णौ० दीप्ताय० नासां० निशाकराय० मुखं० रुद्राय० कंठं० शेषाय० स्कंधौ० ज
गद्व्यापिने० बाहू० तेजोरूपाय० स्तनौ० महेश्वराय० वक्षः० निरंजनाय० उदरं० फलाध्यक्षाय० नाभिं० विश्वरूपिणे० कटी० जगत्प्र
भवे० गुदं० स्वप्रकाशाय० ऊरू० स्वयंज्योतिषे० जानुनी० चतुर्व्यूहाय० गुल्फौ० जनाधिपाय० पादौ० परब्रह्मणे० सर्वांगं०॥विशेषो
पहारादिसमर्प्यरात्रिंनिनयेत् । प्रातःसतिलैर्यवैः अग्नेनयसुपथेतिऋचावृत्त्यादशांशतर्पणंकृत्वातर्पणदशांशेनहोमंकुर्यात् ॥ तद्यथा ॥

अग्निंप्रतिष्ठाप्यान्वादध्यात् । प्रधानंदेवंलक्ष्मीसहितंविष्णुंघृतान्वितपायसपलाशसमिद्घृतद्रव्यैःसहस्रसंख्याकाहुतिभिःतथा ब्रह्मशं भूअष्टाविंशतितिलाहुतिभिःमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ अत्रक्रमः ॥ अग्नेनयऋचापायससमिदंविष्णुरितिमंत्रेणपलाशस मिधःविष्णुगायत्र्याघृतंचहुनेत् । ततःपीठस्थंदेवंसंपूज्यगोघृतालोडितसहस्रवर्तिभिःआर्तिक्यंकृत्वा ततआचार्यंसंपूज्यपीठंघृतपूरि तत्रिंशत्पलपरिमितंकांस्यपात्रंयथाशक्तिवातथासुवर्णवर्तिसंयुक्तरौप्यप्रणीतांचदद्यात् ॥ तत्रमंत्रः ॥रौप्यपात्रस्थितंदीपंहैमवर्तिसमन्वि तम् ॥ कांस्यपात्रेणसहितंददामिव्रतपूर्तये ॥ ततोगांचदत्त्वादशाधिकान्द्विजान्सदन्नेनसंतर्पयेदिति । एवमेवमाणिक्यलक्षवर्तीव्रतं पूर्वोक्तेनविधानेनकुर्यात्सर्वमतंद्रितइति ॥ इत्येकसूत्रवर्तिमाणिक्यलक्षवर्तीव्रतम् ॥ अथरुद्रलक्षवर्तीव्रतंस्कांदे॥ तिथ्यादिसंकीर्त्यममा खिलदुरितनाशाभीष्टसिद्धिपूर्वकशिवलोकप्राप्तिद्वारासांबसदाशिवप्रीत्यर्थमाचरितरुद्रलक्षवर्तीव्रतस्योद्यापनंकरिष्यइतिसंकल्प्यवृता चार्यःलिंगतोभद्रेताम्रकलशोपरिहैमंसांबंरुद्रंकद्रुद्रायेतिमंत्रेणप्रतिष्ठाप्यपुरतोवृषभंचसंपूज्यपुराणपठनादिनारात्रिंनिनयेत् । प्रातरग्निंप्र तिष्ठाप्यान्वादध्यात् ॥ प्रधानंदेवंसांबंरुद्रंरुद्रसूक्तेनॐनमःशिवायेतिमंत्रेणवाघृतपायसबिल्वद्रव्यैःसहस्राहुतिभिःमंडलदेवताश्चैकैकया ज्याहुत्यायक्ष्ये ॥ ततःपीठंगांदीपंचदत्त्वाएकादशाधिकान्द्विजान्भोजयेदिति ॥ अत्रवर्तीदशांशतस्तर्पणंतद्दशांशतोहवनंतद्दशांशतो द्विजभोजनंप्रतिपदोक्तंनास्ति होमदशांशतःसाधारणंतर्पणंकांस्यपात्रसहितंदीपदानंचपूर्ववत्कर्तव्यम् । एवमेवस्कंदभविष्ययोर्बिल्वल क्षवर्तीव्रतोद्यापनमुक्तम् । रुद्रलक्षवर्तिवत्सर्वमनुष्ठानंज्ञेयम्॥ इतिरुद्रबिल्वलक्षवर्तीव्रतोद्यापनम्॥ अथकर्पूरलक्षदीपदानमुक्तं शैवागमे॥ तिथ्यादिसंकीर्त्यममाऽखिलपापक्षयपूर्वकशिवलोककामनयाऽऽचरितलक्षकर्पूरदीपसांगतासिद्ध्येतदुद्यापनंकरिष्यइतिसंकल्प्यवृताचा

यंःसर्वतोभद्रस्थकलशेसांबंभवं नमोभवायचरुद्रायचेतिमंत्रेणसंस्थाप्यपूजयेत् । प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं भवंसहस्र
तिलाहुतिभिर्मण्डलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ततःपीठंगांचदत्त्वाद्विजान्भोजयेत् ॥ होममंत्रः स्थापनोक्तः । इतिकर्पूरलक्षदीपवि
धानम्॥अथलक्षदीपविधानंविष्णुधर्मोत्तरे॥पंचायतनदेवनामाराध्यस्यैववाग्रतः ॥ चातुर्मास्येतुसंप्राप्तेशुभेवामासिभूमिप ॥ प्रत्येकंचै
कदीपंचदीपितंगोघृतेनच ॥ तिलतैलेनवाकुर्यात्कर्पूरेणसमन्वितम् ॥ दीपंप्रज्वाल्यविधिवद्वर्त्याकार्पाससंभुवा ॥ एकसूत्र्यात्रिवर्त्यावा
बिल्वाख्यामणिकान्विता॥एवंप्रकारेणलक्षदीपदानंदेवाग्रेकृत्वा कार्तिकपूर्णिमायामुद्यापनंकुर्यात् ॥तद्यथा॥ तिथ्यादिसंकीर्त्यात्मनोवि
विधपापक्षयपूर्वकाभीष्टकामसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थममाचरितलक्षदीपदानसांगतासिद्ध्येतदुद्यापनंकरिष्ये ॥ वृताचार्यः सर्वतो
भद्रस्थकलशेहेमंदेवंतन्मत्रेणसंस्थाप्यसंपूज्यरात्रौजागरणंकृत्वा प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं पूज्यदेवंघृताक्ततिलद्र
व्येणसहस्राहुतिभिर्मंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततः पीठंसुवर्णवर्तिसंयुक्तरौप्यस्थदीपंघृतपूरितकांस्यपात्रसहितंब्राह्म
णायदत्त्वागांचप्रतिपाद्यद्विजान्भोजयेत् ॥ इति श्रीमच्चित्तपा॰व्रतोद्यापनकौमुद्यां चतुर्विधलक्षवर्तिव्रतोद्यापनंकर्पूरलक्षदीपविधानं
पृथक्पृथग्लक्षदीपविधानंचसमाप्तम् ॥ अथपार्थिवलिंगोद्यापनं लैंगेरुद्रयामले भविष्येशैवागमेचोक्तम् । तत्रविधिः ॥ सहस्रंवाथल
क्षंवाकोटिंवाथविधानतः ॥ लिंगानांपूजयित्वातुसर्वान्कामानवाप्नुयात् ॥ मल्लिंगंपार्थिवंश्लक्ष्णंभुक्तिमुक्तिकरंपरम् ॥ त्रिसंध्यंयोऽर्चयेत्
ल्लिंगंकृत्वाबिल्वेनपार्थिव ॥ एकंदशशतंवापिसर्वाभीष्टमवाप्नुयात् ॥ शुद्धप्रदेशसंभूतांमृदमाहृत्ययत्नतः ॥ शुद्धेनवारिणाभ्युक्ष्यसु
संघट्यतुतत्पुनः ॥ लिंगानांसंख्ययाकुर्यात्पृथक्पिंडान्यथाक्रमम् ॥ पलद्वयान्नकर्तव्यंन्यूनंलिंगंसदैवहि ॥ अखंडंतुचरंलिंगंद्विखं

डंस्थावरंस्मृतम् ॥ लिंगमादौविधायाथपिंडिकांरचयेत्ततः ॥ पक्वजंबूफलाकारंलिंगंकुर्यान्मनोरमम् ॥ वर्तुलंचतुरस्रंवासमंपीठ
द्वयंशुभम् ॥ दर्शनादेवलिंगस्यदेवगंधर्वदानवाः ॥ तत्क्षणंपूजयंत्याशुरचितंनैवसंशयः ॥ साक्षतंस्थापयेत्तस्मान्निर्माणक्षणएवतत् ॥
पूजास्थानंस्कांदे ॥ पाषाणदारुजेदेशेदर्भांतरितसंस्थले ॥ पुष्पप्रकरसंकीर्णेपाणौवावेदिकेभुवि ॥ सबिल्वताम्रपात्रेवास्थापयेत्पार्थिवं
शिवम् ॥ मृल्लिप्तहस्तएवाशुसंक्षालितकरेथवा ॥ पंचाष्टषोडशप्रोक्ताद्वात्रिंशदुपचारकाः ॥ यस्तुपूजयतेभक्त्यालिंगंत्रिभुवनेश्वरम् ॥
सस्वर्गराज्यमोक्षाणांक्षिप्रंभवतिभाजनम् ॥ आदौकृत्वागणेशंचलिंगंकुर्यात्ततःपरम् ॥ पश्चाच्छक्तिंततःस्कन्दंलिंगान्यर्थयथाविधि ॥
हरोमहेश्वरः शंभुः शूलपाणिःपिनाकधृक्॥शिवःपशुपतिश्चैवमहादेवइतिक्रमात्॥ मृदानयनसंघट्टप्रतिष्ठाह्वानमेवच॥ स्नपनंपूजनंचैवक्ष
मस्वेतिविसर्जनम् ॥ अथकामनापरत्वेनएकादशप्रकाराः ॥ तदुक्तंपार्थिवचिंतामणौ ॥ ऋणमोचनकामः एकशतदिनपर्यन्तंप्रत्यहमेकं
लिंगंकृत्वाबृहतीपुष्पंघृतनैवेद्यमनृणाअस्मिन्नितिऋचमष्टोत्तरंजपेत् ऋणान्मुक्तोभवति ॥१॥ पुत्रकामस्तुद्विशतपर्यंतंप्रत्यहंलिंगद्वयं
पंचामृताभिषेकः मल्लिकापुष्पंगुडौदनंनैवेद्यं काण्डात्काण्डात्प्ररोहंतिइतिअष्टोत्तरशतजपः याशतेनप्रतनोषीत्यनेनाष्टोत्तरशतदूर्वार्प
णंपुत्रोभवति ॥ २ ॥ कन्याकामस्तुत्रिशतदिनंप्रत्यहंलिंगत्रयं करवीरपुष्पं शर्करानैवेद्यं पावीरवीकन्येतिमंत्रेणाष्टोत्तरशतंजपेत् या
शतेनेत्यष्टोत्तरशतदूर्वार्पणंकन्याभवति ॥ ३ ॥ द्रव्यकामस्तु चतुःशतदिनपर्यन्तंप्रत्यहंचरित्वालिंगानिकृत्वा किंशुकपुष्पंकदलीफल
नैवेद्यं श्रीसूक्तंदशवारंप्रत्यहंपठेत् द्रव्यागमोभवति॥४॥विवाहकामः प्रत्यहंपंचलिंगानिपंचशतदिनपर्यन्तंकृत्वा चंपकपुष्पं पायसनैवेद्यं
गौरीर्मिमायेतिऋचमष्टोत्तरशतंजपेत्॥५॥कलहनिवृत्तिकामः त्रिंशद्दिनपर्यन्तंप्रत्यहंषड्लिंगानि वकुलस्यपुष्पं मधुनैवेद्यंमुंचामित्वेति

सूक्तंदशधाजपेत्॥६॥तीर्थयात्राकामः पंचाशद्दिनपर्यन्तंप्रत्यहं सप्तलिंगानिशतपत्रपुष्पंदध्योदनंनैवेद्यंरुद्रैकादशिनीजपः॥७॥विद्याका
मः त्रिंशद्दिनपर्यन्तंप्रत्यहमष्टौलिंगानि बिल्वपत्रं लड्डुकनैवेद्यंयच्छंदसामृषभोविश्वरूपइत्यनुवाकंदशधाजपेत् ॥ ८ ॥ अपमृत्युहरण
कामःएकशतदिनपर्यंतंप्रत्यहंनवलिंगानि धत्तूरपुष्पं दध्योदनंनैवेद्यं त्र्यंबकमितिमंत्रमाद्यंतेप्रणवमष्टोत्तरसहस्रंजपेत् ॥ ९॥ दूरगतसु
हृदागमनकामःवर्षमेकंप्रत्यहं दशलिंगानिकांचनोद्भवंपुष्पमपूपनैवेद्यं योरुद्रोअग्नावितिअष्टोत्तरशतंजपेत् ॥ १० ॥ सर्वदारिद्र्यनिवृ
त्तिकामःषण्मासंप्रत्यहमेकादशलिंगानि रक्ताब्जंद्रोणपुष्पं सर्वान्नंनैवेद्यं गोघृताक्तं नमोहिरण्यबाहवइतिमंत्रमष्टोत्तरशतंजपेत् ॥११॥
इत्येकादशप्रकाराः ॥ कारागृहमोचनेविशेषः ॥ कारागृहमोक्षकामएकविंशतिदिनपर्यंतमेकोत्तरवारवृद्ध्यालिंगानिकृत्वाद्वाविंशतिदि
नमारभ्य पुनरेकैकह्रासेनलिंगानिकृत्वायावल्लिंगानिभवंति तावत्प्रत्यहंरुद्रैकादशिन्याभिषेकः पलाशपुष्पं दधिघृतमधुमिश्रान्नंनैवे
द्यमष्टसहस्रं त्वरितरुद्रंजपेत् निगडान्मुक्तोभवति ॥ लिंगसंख्ययाफलभेदमाह । एकंपापहरंलिंगंद्विलिंगंश्रीकरंत्रिलिंगंसर्वकामदम्
विद्याकामेसहस्रंस्त्रीकामेपंचशतंपुत्रकामेपंचदशायुतानि कन्याकामेऽयुतत्रयं भूकामेसहस्रं रूपकामेत्रिसहस्रं राज्यकामेलक्षं मारणेस
प्तसहस्रमुच्चाटनेपंचसहस्रम् ॥ स्तंभनेत्रिसहस्रं जारणेद्विसहस्रं कारागृहमोचनेऽयुतम् निगडमोचनेसार्द्धमयुतं डाकिन्यादिभयेपं
चशतं राज्यभयेअयुतं दारिद्र्यमोचनेपंचसहस्रं सर्वकामेसप्तायुतानि मोक्षकामेलक्षं परमसायुज्यकामेकोटिः । सौवर्णलिंगंसौभाग्यकरं
राजतंयशस्करम् ताम्रमयंपुष्टिकरम् कांस्यमयंकीर्तिकरम् लोहमयंशत्रुमारणकरम् सीसमयमायुःकरम् पाषाणमयंपुण्यकरम् का
श्मीरंश्रीकरम् मारकतंशांतिकरम् स्फाटिकंबहुस्वामित्वकरम् इंद्रनीलमयंपोषणकरम् मुक्तामयंश्रेयस्करम् पारदंसर्वसिद्धिकरं चं

दनजंज्वरनाशकरं कर्पूरजंशांतिकरं गोमयजंसर्वरोगहरं भस्मोद्भवंमोक्षकरम् हारिद्रंप्रीतिवर्धनम् कस्तूरीभवंसुगंधकरं नवनीतजंकी
र्तिकरं दधिजंलक्ष्मीकरं दुग्धजंसुखकरं शर्करोत्थंपुत्रकरं लवणोत्थंसर्वजनवशकरं कृष्णतिलोद्भवंशिवलोकप्रदम् ॥ उक्तेष्वेतेषुलिंगे
षुपार्थिवंक्षिप्रसिद्धिदम् ॥ कृतेमणिमयंलिंगंत्रेतायांहिमसंभवम् ॥ द्वापरेपारदंश्रेष्ठंपार्थिवंतुकलौयुगे ॥ इति ॥ अथारंभकालःशै
वागमे ॥ कार्तिकेमार्गशीर्षेवामाघेवैशाखसंज्ञिते ॥ श्रावणेबहुलेपक्षेव्रतस्याचरणंभवेत् ॥ स्थलविशेषमाह ॥ पुण्यारण्येनदीती
रेपर्वताग्रेशिवालये ॥ श्रीवृक्षाश्वत्थतुलसीधात्रीछायायुतेवने ॥ गोष्ठगृहेवादेवाग्निसूर्यगोविप्रसन्निधौ ॥ शिवपूजाविधातव्यापूर्वंपूर्वं
महाफलम् ॥ समापनकालमाह ॥ कार्तिकादिशुभेमासेलिंगानांचसमापनम् ॥ चतुर्दशीदर्शयुक्ताअष्टमीनवमीयुता ॥ समाप्ति
स्तत्रकर्तव्यारौद्रेयुक्तेपुनर्वसौ ॥ अन्येष्वपिचकालेषुशुभेषुचसमापनम् ॥ अथोद्यापनम् ॥ तिथ्यादिसंकीर्त्याऽमुककामनामुद्दि
श्यकृतानांपार्थिवलिंगानांसंपूर्णफलावाप्तये तदुद्यापनंकरिष्ये ॥ इतिसंकल्प्य पुण्याहवाचनादिविधाय वृताचार्यः सर्षपादिना
भूतान्युत्सार्यद्वारपूजांकुर्यात् । चतुर्द्वारोपशोभितमंडपस्येशानभागेस्थित्वा । सदाशिवमंडपायनमः प्राग्द्वारपार्श्वयोः नंदिनेन
मः महाकालाय० चिच्छक्त्यैन० मायाशक्त्यै० द्वारश्रियै० वास्तुपुरुषाय० दक्षिणपार्श्वयोः गणेशाय० वृषभाय० । चिच्छ
क्त्यादिपूर्ववत् । पश्चिमद्वारपार्श्वयोः भृंगिणे० स्कंदाय० । शक्त्यादिपूर्ववत् । उत्तरद्वारपार्श्वयोः रिटिनेन० चंडीश्वराय० ।
शक्त्यादिपूर्ववत् । ततःपश्चिमद्वारेणप्रविश्यवेदीपश्चिमतः उपविश्यलिंगतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकं कलशंप्रतिष्ठाप्य तदुप
रिदेवंस्थापयेत् । तत्रादौन्यासंकुर्यात् । ललाटे शिवायनमः कंठेरुद्राय० नाभौ ईशानाय० जानुनोः शंकराय० पादयोः

सदाशिवाय० ॥ ततः अश्मन्नूर्जमित्यनुवाकेनपयोधारयालिंगस्याभ्युत्तारणंकुर्यात् ॥ लिंगप्रमाणंतुप्रत्यहंयावन्मानंमृल्लिंगं क्रियतेतावन्मानंतदर्द्धंतदर्द्धंवासौवर्णंराजतंवाकुर्यात् । ततःप्राणप्रतिष्ठांकुर्यात् । पंचामृताभिषेकंचकृत्वाततःकलशेनमःशंभवे चमयोभवेचनमःशंकरायचमयस्करायचेतिमंत्रेणपंचाक्षरेणवालिंगंसंस्थाप्यतद्वामभागेगौरीमिमायेति. ॐनमोभगवत्यैउमादेव्यैशिव प्रियायैनमइत्यागममंत्रेणवाहैमींगौरींप्रतिष्ठाप्यदक्षिणभागे। तत्पुरुषायविद्महेवक्रतुंडायधीमहि॥ तन्नोदंतिःप्रचोदयात् ॥ इतिहैमंगणे शंतद्दक्षिणे। तत्पुरुषायविद्महेमहासेनायधीमहि ॥ तन्नःषण्मुखःप्रचोदयात् । इतिहैमंस्कंदं पुरतोराजतंवृषभमृषभंमेतिमंत्रेण संस्थाप्यपरितोलोकेशान्प्रतिष्ठाप्यपूजयेत् ॥ध्यानं॥ मंगलायतनंदेवंभवंकांतंमनोरमम् ॥ ध्यायेत्कल्पतरोर्मूलेसमासीनंसहोमया ॥ सहस्राणिसहस्रशइतिध्यात्वाॐनमोभगवतेरुद्रायेतिलिंगोपरि अक्षतान्क्षिपेत्। नमस्तारायेत्यासनं० नमःशंभवइतिपाद्यं नमःशंकरायेत्यर्घ्यं नमःशिवायेत्याचमनीयं नमस्तीर्थ्यायेतिरुद्रसूक्तैश्चस्नानं भवंदेवंतर्पयामि शर्वं० रुद्रं० पशुपतिं० उग्रं० महांतं० भीमं० ईशानं० मानस्तोकेतिवस्त्रं० नमोहिरण्यबाहवइत्युपवीतं नमोवृद्धायेतिभूषणं नमःश्वभ्यइतिगंधं० नमःसोमायेत्यक्षतान् नमः पार्यायचेति पुष्पं नमःकपर्दिनेचेतिधूपं नमआशवेचेतिदीपं० नमोबभ्लुशायचेतिनैवेद्यं नमःपर्ण्यायचेतितांबूलं नमोदुंदुभ्यायचेतिदक्षिणां नमइरिण्यायचेत्यारार्तिक्यं ततोलिंगोपरिनमःशर्वायचपशुपतयेचेत्यारभ्य नमोबृहतेचवर्षीयसेचेत्यंतेनपुष्पांजलिः एषतेरुद्रइतिप्रदक्षिणा नमोरुद्रेभ्यइतिनमस्कारः ॥ ततस्तोत्रंपठेत् ॥ नमॐकाररूपायनमोऽक्षरवपुर्धृते ॥ नमोनादात्मनेतुभ्यंनमो बिंदुकलात्मने ॥ अलिंगलिंगरूपायरूपातीतायतेनमः ॥ त्वंमातासर्वलोकानांत्वमेवजगतःपिता ॥ त्वंभ्रातात्वंसुहृन्मित्रंत्वंपितात्वंपि

तामहः ॥ नमस्तेभगवन्रुद्रभास्करामिततेजसे ॥ १ ॥ नमोभवायदेवायउमयासहितायच ॥ सर्वायक्षितिरूपायसदासुरभिणेन
मः ॥ पशूनांपतयेचैवकामिनेऽमिततेजसे ॥ भौमायव्योमरूपायशब्दरूपायतेनमः ॥ महादेवायसोमायअमृतायनमोनमः ॥ उग्रा
ययजमानायनमस्तेकर्मयोगिने ॥ इतिस्तुत्वाक्षमापयेत् ॥ ॐ अंगहीनंक्रियाहीनंविधिहीनंमहेश्वर ॥ पूजितोऽसिमयादेवतत्क्षमस्व
जगत्पते ॥ इतिक्षमाप्यपुराणपठनादिनारात्रिंनिनयेत् ॥ रात्रौप्रारंभः । तद्दिनेउपोषणं प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्र
धानं सोमंशिवंकृतलिंगद्वादशांशेनवापायसमधुशर्कराज्यतिलाक्षतबिल्वपत्रशतपत्रपत्रद्रव्याष्टकेनकेवलपायसेनवा नमःशंभवेचेतिमं
त्रेणपंचाक्षरेणवायक्ष्ये तथागौरींगणेशंषण्मुखंचउक्तद्रव्यैःप्रतिद्रव्यंदशाहुतिभिः वृषभंलोकेशान्ब्रह्मादिदेवताश्चदशदशतिलाहुतिभिः
द्वारदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादि । होमंसमाप्यपूर्णाहुत्यादिकर्मशेषंसमापयेत् । ततोहोमदशांशेनत
र्पणंतद्दशांशेनमार्जनंकृत्वाविशेषसत्कारेणपीठस्थंदेवंशिवंसंपूज्याचार्यायचसंपूज्यपीठंदद्यात् ॥ तत्रमंत्रः ॥ पीठंगृहाणभूदेवशिवश
क्त्यादिसंयुतम् ॥ वांछितार्थंप्रयच्छायुर्देहिमेव्रतजंफलम् ॥ इति । ततोव्रतपूर्त्तयेगांचदत्त्वामार्जनेनदशांशतो यथाशक्तिवासदन्ने
नब्राह्मणान्संतर्प्यव्रतपूर्णतांवाचयित्वाऽऽशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ अत्रत्रैवर्णिकानामेवाधिकारः ॥ स्त्रीशूद्राणांतुपूजयैवोद्याप
नासिद्धिरितिलैंगात् ॥ इतिशैवागमोक्तपार्थिवलिंगोद्यापनम् ॥ अथपार्थिवगणेशोद्यापनं रुद्रयामले ॥ महादेवउवाच ॥ यथापार्थिवलिंगं
तुसर्वसिद्धिविधायकम् ॥ तथाविघ्नेश्वरंदेवंपार्थिवंसर्वकामदम् ॥ निर्विघ्नंजायतेकार्यंसर्वांसिद्धिंपुमाँल्लभेत् ॥ षट्कर्माणितथाचक्षेशृणुष्वै
कमनाभव ॥ रक्तोपचारैःसिंदूरैरक्तमाल्यांबरैस्तथा॥जपापुष्पैःकारवीरैः कुसुमैः क्षीरपायसैः ॥ संपूज्यवश्यतामेतियंयंचिंतयतेनरः ॥

शुक्लमाल्यैःशुक्लवस्त्रैरोदनैर्दधिमिश्रितैः ॥ मालतीकुसुमैर्धूपैर्दशांगैःशांतिलब्धये ॥ कवितायाःपटुत्वंचजायतेनात्रसंशयः ॥ मोहनेम
धुभिःस्नाप्यमधुपायसमर्पयेत् ॥ असितैःकुसुमैःपूज्योदमनेनासितागुरुम् ॥ समारोप्यार्चयेद्भक्त्यात्रैलोक्यंमोहयेत्क्षणात् ॥ स्तंभने
निशयायुक्तैरुपचारैः समर्पयेत् ॥ आढकीभक्तनैवेद्यैःश्वेतदूर्वाभिरेवच ॥ कारयेन्निंबजरसंधूपंशत्रोस्तुतद्भवेत् ॥ मारणेमाहिषेचर्मण्या
स्थायासितकंबलम् ॥ धत्तूरैरर्चयेत्पुष्पैः सर्षपाक्षतमिश्रितैः ॥ नैवेद्यंगुडसंमिश्रंमाहिषक्षीरसंयुतम् ॥ भक्तंशाल्युद्भवंदेयंछागमांसस
मन्वितम् ॥ अभिषेकस्तुतैलेनमहागणपतयेभवेत् ॥ धूपःश्मशानजतरोः पुष्पैःसद्यःसमर्पयेत् ॥ एवंगणाधिपंकृत्वापूजयेत्पार्थिवं
नरः ॥ यंयंकाममभिध्यायेत्तंतंसद्यःसमाप्नुयात् ॥ पाद्मेविशेषः । सहस्रंदशसाहस्रंलक्षंकोटिंतथैवच ॥ यःकरोतिगणेशानांपार्थिवानांन
रोत्तमः ॥ सर्वसिद्धिमवाप्नोतिनात्रकार्याविचारणा ॥ कारागृहमोचनकामः एकविंशतिदिनपर्यन्तमेकोत्तरवारवृद्ध्यापार्थिवगणेशान्कृ
त्वावक्ष्यमाणप्रकारेणसंपूज्यपुनःद्वाविंशतिदिनमारभ्यएकैकह्रासेनप्रथमदिनपर्यन्तंगणेशान्कृत्वायावद्गणेशाभवंति तावत्प्रत्यहं गणे
शाथर्वशिरसाऽभिषेकः मूलमंत्रस्यापितावत्सहस्रजपः अभीष्टसिद्धिर्भवति।एकविंशतिपुष्पाणि।दाडिमीचजटामांसीचदरीनागचंपकः॥
बृहतीचतथापाचीभृंगराजस्तथैवच॥मालतीकुसुमैश्चैवतुलसीमाधवीतथा॥करवीरंदमनकंकमलंकुमुदंतथा॥अतसींचतथाकुंदंदूर्वांश्वेतां
शमींतथा॥पारिजातंजपापुष्पंबंधूकंचैकविंशतिः॥पुष्पाभावेपत्रंग्राह्यम् ॥ अपूपंशर्करामिश्रंनैवेद्यंकदलीफलम् ॥ नालिकेरंचसिंदूरंदूर्वा
गुग्गुलधूपकः॥इदंप्रत्यहंसाधारणम्।अथसर्वसाधारणपूजोच्यते॥अभीष्टसिद्ध्यर्थंपार्थिवगणपतिपूजांकरिष्ये । अश्वत्थमूलजांतुलसीमू
लजांशुद्धस्थलजांवामृदमानीयपृथ्वित्वयाधृतालोकाइतिधरांप्रार्थयित्वा ॐ गांगणपतयेनमःमृदाहरणम् ॐ गींगणपतयेनमःसेचनम् ॐ

गूंहेरंबायनमः संयोजनम् ॐ गैंधरणीधराय० ॐ गौंक्षिप्रप्रसादनाय० चतुर्भुजामेकदंतांसुंदरांमूर्तिंकृत्वा ॐगःसर्वसिद्धिप्रदायकाय० मस्तकोपरिरक्ताक्षतान्दत्त्वाहृदिस्थंदेवंमानसोपचारैः संपूज्यनासारंध्रेणांजलिस्थसाक्षतपुष्पैः संयोज्यदेवमस्तके अक्षतपुष्पादि निधायप्राणप्रतिष्ठांकुर्यात् । ततःस्ववामभागेकलशंसंपूज्यदेवंध्यायेत् । तत्रादौस्वशरीरेदेवेचन्यासंकुर्यात् ॐ गांगींगूंगैंगौंगःषडंगंकृत्वामूलमंत्रेणषडंगंकुर्यात् । तद्यथा ॥ अस्यश्रीमहागणपतिमंत्रस्य गणक ऋषिः निचृद्गायत्रीच्छंदः गणपतिर्देवता गंबीजंओंशक्तिः स्वाहाकीलकं न्यासादौविनियोगः ॐ नमोहेरंबमदमोहितममसंकटान्निवारयनिवारयस्वाहा । एवंषडंगंन्यासंकृत्वाध्यायेत् ॥ रक्तोरक्तांगरागांशुककुसुमयुतस्तुंदिलश्चंद्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणोबीजपुष्पांतनासः ॥ हस्ताग्राक्लृप्तपाशांकुशरदवरदोनागवक्रोहिभूषोदेवःपद्मासनोनोभवतुसुरनुतोभूतयेविघ्नराजः ॥ इतिध्यात्वामूलमंत्रेणनाममंत्रेणचपूजयेत् । ॐ गणंजयायन० आवाहनं गणपतये० आसनं हेरंबाय० पाद्यं धरणीधराय० अर्घ्यं महागणपतये० मधुपर्कं यक्षेश्वराय० आचमनीयं क्षिप्रप्रसादाय० मलापकर्षस्नानम् अमोघसिद्धये० पंचामृतस्नानम् अमृताय० शुद्धोदकस्नानं रुद्रेणगाणपत्येनसूक्तेनाथर्वशिरसावामहाभिषेकः मंत्राय० वस्त्रं चिंतामणये० उपवीतं निधये० गंधं सुमंगलाय० रक्ताक्षतान् बीजाय० पुष्पम् आशापूरकाय० सुगंधिद्रव्यं वरदाय० दीपं शिवाय० महानैवेद्यं काश्यपाय० तांबूलं नंदनाय० दक्षिणां वाचासिद्धाय० फलं ढौंढिविनाय० नीराजनं० सर्वसंकटनाशनाय० मंत्रपुष्पं कुमारगुरवे० प्रदक्षिणाम् अघनाशिने० नमस्कारम् एवंचतुर्विंशत्युपचारान्समर्प्य ततोगणंजयादारभ्यढौंढिविनायकांतैरेकविंशतिनामभिरेकविंशतिश्वेतदूर्वांकुरानभावेअन्यान्समर्प्यमूलमंत्रमष्टोत्तरशतंजप्त्वाविशेषार्घ्यंदत्त्वा

क्षमापयेत् ॥ अंगहीनंक्रियाहीनंभक्तिहीनंगणाधिप ॥ पूजितोऽसियथादेवतत्क्षमस्व जगत्पते ॥ इतिशैवागमोक्तपूजाविधिः ॥ एवंप्र
कारेणसहस्रमयुतंलक्षंकोटिंवापार्थिवान्कृत्वांतेमाघादिशुभकालेउद्यापनंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्याऽमुककामनयाकृतानां
पार्थिवगणेशानांसंपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये॥ इतिसंकल्प्य वृताचार्यःचतुर्द्वारोपशोभितमंडपांतर्वेदिकायांसर्वतोभद्रेब्रह्मादिदेव
तास्थापनपूर्वकंकलशंप्रतिष्ठाप्यतत्रदेवंस्थापयेत् ॥तत्रादौपूर्वोक्तान्न्यासान्कृत्वा अश्मन्नूर्जमित्यनुवाकेनपयोधारयाप्रतिमायाअग्न्युत्ता
रणंकुर्यात् । प्रतिमाप्रमाणंतुप्रत्यहंयावन्मानंमृद्गणेशंक्रियतेतावन्मानेनतदर्द्धेनवासौवर्णंराजतंवादेवंकुर्यात् । ततःप्रतिष्ठांकृत्वामूलमं
त्रेणगणानांत्वेतिवाप्रतिष्ठाप्याऽऽवरणानिपूजयेत् पूर्वादिक्रमेण वक्रतुंडाय० एकदंष्ट्राय० गजाननाय० महादेवाय० विकटाय० विघ्न
राजाय० धूम्रवर्णाय० हेरंबाय० ततोबाह्येपूर्वादिक्रमेण ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै०
वैनायक्यै० ततोलोकेशानावाह्यपूर्वोक्तपूजाप्रकारेणपूजयेत् । पुष्पोत्तरमंगपूजा ॥ गणनाथाय० पादौपू० गणेशाय० जानुनी०
गणंजयाय० ऊरू० गणक्रीडाय० कटी० वक्रतुंडाय० हृदयं० लंबोदराय कंठं० गजाननाय० स्कंधौ० हेरंबाय० हस्तौ०
विकटाय० आस्यं० विघ्नराजाय० नेत्रे० धूम्रवर्णाय० शिरः० सर्वसिद्धिप्रदायकाय० सर्वांगम्० ॥ एवंसंपूज्यस्तोत्रैःस्तुत्वा
पुराणपठनादिनारात्रिंनिनयेत् । प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानंदेवंमहागणपतिंपायसतिलाज्यमोदकरक्ताक्षतपंचखाद्य
शमीदूर्वाद्रव्याष्टकेनतिलपायसेनवाकृतगणेशदशांशेनवायक्ष्ये आवरणदेवतामंडलदेवताश्चदशदशतिलाहुतिभिर्यक्ष्ये ॥ एवंहोमं
संपाद्यदेवंसंपूजयेत् । होममंत्रास्तुआतूनइंद्रइति गणानांत्वेतिमूलमंत्रेणवा ॥ ततोहोमदशांशेनतर्पणं तद्दशांशेनमार्जनंकृत्वा

ततआचार्यंसंपूज्यपीठंनिवेद्यगांचदत्त्वाएकविंशतिंब्राह्मणान्संपूज्यपक्वान्नपरिपूरितकलशंवस्त्रयुग्मसहितंसदक्षिणंतेभ्यःप्रत्येकंपूर्वोक्तपु
ष्पांजलिस्थैकविंशतिनामभिर्दत्त्वामार्जनदशांशतोब्राह्मणभोजनसंकल्पंकृत्वाभूयसींदत्त्वासदन्नेनद्विजान्संतर्प्यव्रतपूर्णतांवाचयित्वाऽऽ
शिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ अयमुद्यापनप्रकारोरुद्रयामलोक्तः ॥ इतिश्रीमच्चितपा० व्रतोद्यापनकौमुद्यांपार्थिवलिंगग
णेशोद्यापनंसमाप्तम् ॥ अथतुलसीविवाहविधिः ॥ विष्णुयामले । आदावेवाथतुलसींवनेवास्वगृहेपिवा ॥ मासमात्रेणसं
वर्ध्यततोयजनमारभेत् ॥ सौम्यायनेप्रकर्तव्यंगुरुशुक्रोदयेतथा ॥ अथवाकार्तिकेमासिभीष्मपंचदिनेऽथवा ॥ वैवाहिकेषुऋक्षे
षुपूर्णिमायांविशेषतः ॥ मंडपंकारयेत्तत्रकुंडवेदीविवाहवत् ॥ ब्राह्मणंदेशिकंचैवचतुरश्चतथर्त्विजः ॥ ग्रहयज्ञंपुरस्कृत्यमातृणां
यजनंतथा ॥ कृत्वानांदीमुखंश्राद्धंसौवर्णंस्थापयेद्धरिम् ॥ कृत्वातुरौप्यतुलसींलग्नेह्यस्तमितेरवौ ॥ गोधूलिकलग्नेइत्यर्थः ।
संपूज्यालंकृतांतांचप्रदद्याद्विधितोहरेः ॥ हरयेइत्यर्थः । समश्नुतेनमंत्रेणवस्त्रयुग्मेनवेष्टयेत् ॥ यदाबध्नेतिमंत्रेणकंकणंपाणिपल्लवे ॥
आजंददादितिमंत्रेणकरग्रहोविधीयते ॥ कर्तव्यश्चततोहोमोविशेषाद्विधिपूर्वकम् ॥ आचार्योवेदिकाकुंडेजुहुयाच्चनवाहुतीः ॥ ॐनमोभगव
तेवासुदेवायस्वाहा ॐ नमोनारायणायस्वाहेतिवा । यजमानःसपत्नीकः सहामात्यैश्चगोत्रजैः ॥ प्रदक्षिणाःप्रकुर्वीतचतस्रोविष्णुनासह ॥
विष्णुसहिततुलस्याइत्यर्थः । पठेयुःशांतिकाध्यायांस्तथावैष्णवसंस्तवान् ॥ गायंतुमंगलंनार्योभेरीतूर्यादिनिःस्वनैः ॥ गांपीठंच ॥ ७० ॥
तथाशय्यामाचार्यायनिवेदयेत् ॥ ऋत्विग्भ्योदक्षिणांदद्यात्सदन्नैर्भोजयेद्द्विजान् ॥ एवंप्रतिष्ठितांदेवींविष्णवेयःसमर्पयेत् ॥ आज
न्मोपार्जितात्पापान्मुच्यतेनात्रसंशयः ॥ अथप्रयोगः ॥ तिथ्यादिसंकीर्त्यममाऽखिलविविधपातकशमनपूर्वकाभीष्टसिद्धिद्वाराश्री

महाविष्णुप्रीत्यर्थंतुलसीविवाहंकरिष्ये ॥ इतिसंकल्प्य तदंगस्वस्तिवाचनादिग्रहयज्ञंचकृत्वाएवमाचार्यमृत्विजोवृत्वातुलस्याआल
वालंपरितोमंडपंचकृत्वा विवाहवत्तत्रतुलसीपुरतोवेदींकृत्वातुलस्याहरिद्रारोपणादिकृत्वावेद्यांसर्वतोभद्रेहैमंविष्णुमिदंविष्णुरितिमंत्रे
णरौप्यमयींतुलसींच ॥ तुलसिश्रीसखिशुभेपापहारिणिपुण्यदे ॥ नमस्तेनारदनुतेनारायणमनःप्रिये ॥ इतिसंस्थाप्यसंपूज्यवस्त्र
भूषणादिनाभूषयित्वागोधूलिलग्नेमध्येअंतःपटंधृत्वा विवाहवत्सर्वमंगलाष्टकानिपठित्वांतःपटंनिःसार्य ॐ पुण्येत्युक्त्वासंकल्पपूर्वकां
सालंकारांवस्त्रयुग्मवेष्टितांतुलसींहरयेप्रतिपाद्य यदाबध्नेतिमंत्रेणोभयोःकंकणंबद्ध्वा आजंददादितिमंत्रेणकरग्रहंकृत्वाआचार्योवेदिका
यांपाकयज्ञविधानेन अग्निंप्रतिष्ठाप्य तुलसीविवाहहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये इतिसंकल्प्य । अत्रप्रधानम् विष्णुंत्रयोद
शाक्षरमंत्रेणाष्टादशाक्षरेणवानवाज्याहुतीर्यक्ष्ये । शेषेणस्विष्टकृदादि । ततोयजमानश्चतस्रःप्रदक्षिणाःकृत्वाशांतिपाठादिपठित्वा
तूर्यादिघोषपूर्वकंयथाविभवंविष्णुंतुलसींचसंपूज्यपीठंगांचाचार्यायऋत्विग्भ्योदक्षिणांचदत्त्वाब्राह्मणान्भोजयेदिति ॥ अथतुलसीपूज
नंविष्णुधर्मोक्तंविलिख्यते ॥ तुलसीमंगणेवेदिकायांरोपयित्वापूजयेत् ॥ अभीष्टसिद्ध्यर्थंतुलसीपूजांकरिष्ये ॥ ततःकलशंसंपूज्य
ध्यायेत् । ध्यायामितुलसींदेवींश्यामांकमललोचनाम् ॥ प्रसन्नांपद्मकह्लारवराभयचतुर्भुजाम् ॥ किरीटहारकेयूरकुंडलादिविभूषिताम् ॥
धवलांशुकसंयुक्तांपद्मासननिषेदुषीम् ॥ध्यानम् ॥ भगवत्यैतुलस्यैन० आवाहनं० विष्णुवल्लभायै० आसनं० सर्वदेवमयायै०पाद्यं०
सर्वतीर्थमयायै० अर्घ्यं० दैत्यांतकृत्प्रियायै० आचमनीयं० सर्वलोकहितायै० स्नानं० लक्ष्मीसहोदरायै० वस्त्रं० महादेव्यै० गंधं०
रमावासायै० पुष्पम्० अभीष्टदायै० धूपं० पापहारिण्यै० दीपं० भगवत्यै० नैवेद्यम्० अमृतसंभूतायै० तांबूलम्० अमृतरूपिण्यैन०

दक्षिणां० जगद्धात्र्यै० नीराजनं० सुदक्षिणायै० प्रदक्षिणां० परमेश्वर्यै० नमस्कारं० अभीष्टदायै० प्रार्थनां० ततःतुलसीमंत्रमष्टो त्तरशतंयथाशक्तिवाजपेत् ॥ तुलसिश्रीसखिशुभेपापहारिणिपुण्यदे ॥ नमस्तेनारदनुतेनारायणमनःप्रिये ॥ ततःस्कांदोक्तंतुलसी कवचंपठेत् ॥ अस्यश्रीतुलसीकवचस्य विष्णुर्ऋषिः अनुष्टुप्छंदः तुलसीदेवताअभीष्टसिद्ध्यर्थेजपेविनियोगः ॥ तुलसीमेशिरः पातुभालंपंकजधारिणी ॥ दृशौमेपद्मनयनाश्रीसखीश्रवणेमम ॥ घ्राणंसुगंधामेपातुमुखंचसुमुखीमम ॥ जिह्वांमेपातुशुभदाकंठं विद्यामयीमम ॥ स्कंधौकह्लारिणीपातुभुजौमेपापहारिणी ॥ करौपद्मकरापातुहृदयंविष्णुवल्लभा ॥ पुण्यदामध्यमंपातुनाभिंसौ भाग्यदायिनी ॥ कटिंकुंडलिनीपातुऊरूनारदवंदिता ॥ जननीजानुनीपातुजंघेसकलवंदिता ॥ नारायणप्रियापातुसर्वांगंसर्वरक्ष का ॥ संकटेविषमेदुर्गेभयेवादेमहाहवे ॥ निश्यह्निसंध्ययोःपातुतुलसीसर्वतःसदा ॥ इतीदंपरमंगुह्यंतुलस्याःकवचंमुदा ॥ तुलसीकाननेतिष्ठन्नासीनोवाजपेदिदम् ॥ सर्वान्कामानवाप्नोतिविष्णुसायुज्यमृच्छति ॥ इतितुलसीकवचम् ॥ अथधात्रीव्रतं विष्णुधर्मोत्तरे ॥ तत्रविधिः ॥ आश्विनपौर्णमासीमारभ्यकार्तिकपूर्णिमापर्यन्तंकर्तव्यम् ॥ अशक्तावंतिमदिनत्रयंपूर्णिमायां वाकार्यम् ॥ तिथ्यादिसंकीर्त्यममाखिलपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थंधात्रीमूलेविष्णुपूजांधात्री पूजांचकरिष्ये ॥ इतिसंकल्प्य धात्र्या आलवालंकृत्वातन्मूलेपंचरंगोपेतांवेदिकांकृत्वातत्रविष्णुंसंस्थाप्यपूजयेत् । शांता कारंभुजगशयनमितिध्यात्वापुरुषसूक्तेनपूजयेत् । धूपात्प्रागंगपूजा । दामोदरायनमः पादौपू० केशवाय० कटी० नारायणाय० उदरं० वामनाय० कंठं० श्रीधराय० बाहू० गोविंदाय० मुखं० सहस्राक्षाय० नेत्रे० सर्वेश्वराय० ललाटं० विष्णवे०

शिरः० त्रिविक्रमाय० सर्वांगं० । नमस्कारानंतरंविशेषार्घ्यंपुष्पश्रीफलसंयुक्तंदद्यात् ॥ तत्रमंत्रः ॥ नमःसहस्रशीर्षायसहस्राक्षायतेनमः ॥ नमस्तेसहस्रपदेपुरुषायनमोस्तुते ॥ सहस्रनाम्नेदेवेशप्रसीदत्वंममाच्युत ॥ अर्घ्यंगृहाणभगवन्सर्वकामप्रदोभव ॥ ततः प्रार्थयेत् ॥ भगवन्देवदेवेशलोकनाथजगत्पते ॥ अक्षयासंततिर्मेऽस्तुदामोदरनमोस्तुते ॥ ततोधात्र्यैनमइतिनाममंत्रेणषोडशोपचारैः धात्रींसंपूज्य ॥ अथवाषोडशनामभिः षोडशोपचारान्कल्पयेत् । शांत्यै० कांत्यै० मेधायै० प्रकृत्यै० विष्णुपत्न्यै० महालक्ष्म्यै० रमायै० कमलायै० इंदिरायै० कल्याण्यै० कमनीयायै० सावित्र्यै० जगद्धात्र्यै० गायत्र्यै० धृत्यै० अव्यक्तायै० ॥ गंधोत्तरमंगपूजा ॥ विश्वरूपायै० पादौपू० सुरूपायै० कटीपू० अब्धिसंभवायै० हृदयं० लोकमात्रे० मुखं० धात्र्यै० शिरः० एवं सम्पूज्य ततोऽष्टदिक्षुदीपान्बलिंधात्र्यैनमइतिदत्त्वातथैवाष्टकृत्वः सूत्रेणवेष्टयित्वाष्टकृत्वःप्रदक्षिणा नमस्कारांश्चकृत्वाप्रार्थयेत् । धात्रिदेविनमस्तुभ्यंसर्वपापक्षयंकरि ॥ वर्चस्वंकुरुमांदेविधनवंतंतथाकुरु ॥ पुत्रान्पौत्रान्बलंप्रज्ञांदेहिमेजगदीश्वरि ॥ संवत्सरकृतंपापंदूरीकुरुममाक्षये ॥ ततोधात्रीमूलेसव्येनैवतर्पयेत् । पितापितामहश्चान्येअपुत्रायेचगोत्रिणः ॥ वृक्षयोनिगतायेचयेचकीटत्वमागताः ॥ तिर्यग्योनिगतायेचयेचब्रह्मांडमध्यगाः ॥ पिशाचत्वंगतायेचयेचप्रेतत्वमागताः ॥ तेपिबंतुमयादत्तंधात्रीमूलेऽक्षयंपयः ॥ तेसर्वेतृप्तिमायांतुधात्रीमूलेनिषेचनात् एवंप्रत्यहंमासपर्यंतंकृत्वांतेउद्यापनविधिनामंडलेसौवर्णींधात्रींमूलेहैमंविष्णुंपूर्ववत्संपूज्यघृताक्ततिलैरष्टोत्तरशतंपृथक्पृथक्तत्तन्मंत्राभ्यांहुत्वाचार्यायपीठंव्रतपूर्तयेगांचदत्त्वासर्वसंपूर्णतासिद्धयेसुवर्णयुक्तघृतपूरितकांस्यपात्रंदद्यात् ॥ तत्रमंत्रः ॥ कांस्यंब्रह्ममयंप्रोक्तमाज्यंभोज्यंदिवौकसाम् ॥ सुवर्णमग्निदैवत्यमतः शांतिंप्रयच्छमे ॥ ततोद्विजान्संभोज्यआशिषोगृहीत्वास्वयंभुंजीत॥

इति श्रीमाच्चित्तपा० व्रतोद्यापनकौमुद्यांतुलसीविवाहविधानंधात्रीविधानंचसमाप्तम् ॥ अथध्वजारोपणम् बृहन्नारदीये ॥ यःकुर्याद्विष्णु
भवनेध्वजारोपणमुत्तमम्॥संपूज्यतेविरिंच्याद्यैःकिमन्यैर्बहुभाषितैः॥सर्वपापहरंकर्मध्वजारोपणसंज्ञितम् ॥ महापातकयुक्तोवायुक्तोवास
र्वपातकैः ॥ ध्वजंविष्णुगृहेकृत्वासर्वपापैःप्रमुच्यते ॥ यावद्दिनानिवसतिध्वजोविष्णुगृहेद्विजाः ॥ तावद्युगसहस्राणिहरिसारूप्यमश्नुते ॥
स्वारोपितोध्वजोविष्णुगृहेधुन्वन्पटंस्वकम् ॥ कर्तुर्धुनोतिसर्वाणिपापानिनिमिषार्द्धतः ॥ इति । तत्रविधिः ॥ कार्तिकासितदशम्यांनिय
मान्वितएकादश्यामुपोषितःविष्णुस्मरणतत्परः द्वादश्यांप्रातर्यथाविधिस्नात्वानित्यकर्मनिर्वर्त्यसंकल्पंकुर्यात् । तिथ्यादिसंकीर्त्यअ
शेषपापौघक्षयसकलाभीष्टसिद्धिपूर्वकविष्णुसारूप्यकामोविष्णुद्वारेध्वजारोपणंकरिष्ये ॥ पुण्याहवाचनादिकृत्वाआचार्यंचतुरःऋत्वि
जश्चवृत्वातैःसहदेवालयेविष्णंपुरुषसूक्तेनसंपूज्यततोत्युच्चध्वजस्तंभौगायत्र्याप्रोक्ष्यध्वजयुतौकृत्वातत्रसूर्यंवैनतेयंहिमांशुंधातारंविधा
तारंचनाममंत्रैरावाह्यसंपूज्यचध्वजौहरिद्राक्षतगंधपुष्पादिभिर्भूषयित्वाशुद्धभूमौस्थंडिलेऽग्निंप्रतिष्ठाप्यान्वादध्यात् । अत्रप्रधानं वि
ष्णुमष्टोत्तरशतंपायसाहुतिभिःसूर्यंवैनतेयंहिमांशुंधातारंविधातारंचाष्टाष्टसंख्ययापायसाज्याहुतिभिःशेषेणस्विष्टकृतमित्यादि । वि
ष्णुहोममंत्राःषोडशर्चंपौरुषसूक्तमिरावतीइतिप्रतिद्रव्यमष्टादशभिर्मन्त्रैःषोडशावृत्त्याहोमयेत्।उदुत्यंजातवेदसमितिसूर्यस्य । सामध्व
निशरीरस्त्वमितिगरुडस्यसोमोधेनुमितिहिमांशोः । धातुः धाताददातुनोरयिमीशानोजगतस्पतिः॥ सनःपूर्णेनवावनत्॥विधातुःयोनः
पिताजनितायोविधातायोनःसूतोअभ्यासज्जजान ॥ इति । ततःसौरमंत्रान्शांतिसूक्तानिचपठित्वाजागरणादिनारात्रिंनिनयेत् । प्रा
तर्देवंसंपूज्यततःसूक्तपाठैःस्तोत्रपठनैर्नृत्यमंगलवाद्यघोषैःसहदेवंप्रदक्षिणीकृत्य देवालयंध्वजावानीयदेवस्यद्वारदेशेशिखरेवासुस्थिरौ

कृत्वाध्रुवसूक्तंपठित्वातंसंपूज्यपुनर्देवालयेदेवंविशेषप्रकारेणसंपूज्यइदंस्तोत्रंपठेत् ॥ सूतउवाच ॥ नमस्तेपुंडरीकाक्षनमस्तेविश्व
भावन ॥ नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज ॥ यत्रेदमखिलंजातंयत्रसर्वंप्रतिष्ठितम् ॥ लयमेष्यतियत्रैतत्तंप्रपन्नोऽस्मिकेशवम्॥ नजानं
तिपरंभावंयत्रब्रह्मादयःसुराः ॥ योगिनोयंनपश्यन्तितंवंदेईशरूपिणम् । अंतरिक्षंतुयन्नाभिर्द्यौर्मूर्धायस्यचैवहि॥पृथिवीयस्यपादौचतं
वंदेविष्णुरूपिणम्॥यस्यश्रोत्रेदिशःसर्वायच्चक्षुर्दिनकृच्छशी॥ऋक्सामयजुषोनेतितंवंदेब्रह्मरूपिणम् ॥ यन्मुखाद्ब्राह्मणाजातायद्बाह्वोरभ
वन्नृपाः ॥ वैश्यायस्योरुतोजाताःपद्भ्यांशूद्रोअजायत ॥ मायासंगस्यमात्रेणवदंतिपुरुषंतुये ॥ स्वभावविमलंशुद्धंनिर्विकारंनिरंजनम् ॥
एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः॥ त्रीँल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ योदेवःसर्वभूतानामंतरात्माजगन्मयः ॥ निर्गुणः
परमानंदःसमेविष्णुःप्रसीदतु ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ परेशःपरमानंदः
परात्परतरःप्रभुः ॥ चिद्रूपश्चसविज्ञेयःसमेविष्णुःप्रसीदतु ॥ ज्ञानिनांकर्मिणांचैवतथाभक्तिमतांनृणाम् ॥ गतिदाताविश्वगम्यःसमे
विष्णुःप्रसीदतु ॥ यइदंकीर्तयेन्नित्यंस्तोत्राणामुत्तमोत्तमम् ॥ सर्वपापविनिर्मुक्तःपरंसायुज्यमाप्नुयात् ॥ ततोद्वादशब्राह्मणान्संभोज्य
दक्षिणादिनाप्रतोष्यआशिषोगृहीत्वाभुंजीत ॥ एवमेवशिवादीनां तत्रगरुडस्थानेवृषभः । अन्यत्समानम् । होमेपौरुषंत्र्यंबकंकद्रुद्राये
ति ॥ इतिध्वजारोपणम् ॥ अथकार्तिकादिमासव्रतोद्यापनं पाद्मे ॥ आदौमध्ये अंतेवापूर्णिमायांकार्यम् । तिथ्यादिसंकीर्त्यआत्मनः
सकलपापनाशपूर्वकैहिकामुष्मिकविविधसुखप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थं कृतंयत्कार्तिकादिमासस्नानंतत्संपूर्णफलावाप्तयेतदुद्याप

नंकरिष्ये । इतिसंकल्प्यवृताचार्यस्त्रिंशद्दंडप्रमाणेयथाशक्तिवाकृतेमंडपेपंचरंगोपेतमंडलेब्रह्मादिदेवतास्थापनपूर्वकंकलशंहैमंरौप्यं
ताम्रंवाषोडशपलमितंप्रातिष्ठाप्यतत्रपूर्णेऽष्टदलेकर्षमात्रंतदर्द्धंतदर्धंवाहैमंलक्ष्म्यायुतंदामोदरमिदंविष्णुरितिमंत्रेणप्रतिष्ठाप्यपुरतोगरुडं
परितोलोकेशानावाह्यपुरुषसूक्तेनसंपूज्यस्तोत्रैःस्तुत्वाजागरादिनारात्रिंनिनयेत् । प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम्
लक्ष्म्यायुतंदामोदरंसाज्ययवमिश्रिततिलाश्वत्थसमिद्घृतपंचखाद्यद्रव्यचतुष्टयेनाष्टोत्तरसहस्राहुतिभिःपरिवारदेवताः ब्रह्मादिदेवता
श्वदशदशतिलाहुतिभिर्यक्ष्ये ॥ ततआचार्यायपीठंदद्यात् ॥ तत्रमंत्रः ॥ दामोदरसलक्ष्मीकसुप्रतीकजनार्दन ॥ त्वंमांमो
चयपापाद्वैतवमूर्तिंप्रदानतः ॥ अधिकफलावाप्तयेसोपस्करांशय्यांगांचदत्त्वा ततस्त्रिंशदेकंवापक्वान्नपूरितंकांस्यपात्रंसदक्षिणंदद्यात् ॥
तत्रमंत्रः ॥ कांस्यंविष्णुमयंप्रोक्तंपक्वान्नैःपरिपूरितम् ॥ ब्राह्मणायप्रदास्यामिकेशवःप्रीयतामिति॥ततोब्राह्मणान्सदन्नेनसंभोज्यदक्षिणां
दत्त्वाऽऽशिषोगृहीत्वाबंधुजनैःसहभुंजीत ॥ एवमेवमाघवैशाखयोः।माघेतुमाधवोदेवोवैशाखेमधुसूदनः॥ इतिकार्तिकादिमासोद्यापनम्॥
अथत्रिपुरविधिःपाद्मे ॥ कार्तिकमासपर्यन्तंप्रत्यहंदीपदानंकृत्वा ॥ अंतेपूर्णिमायांत्रिपुरंज्वालयेत् ॥ पौर्णमास्यांसायंकाले देवद्वारस्थ
त्रिपुरस्यतदभावेतुलस्यावायच्चान्यमृदावेदिकांनिर्मायतत्रकंदर्पंपूजयेत् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्याभीष्टसिद्धिद्वाराश्रीपरमेश्वरप्री
त्यर्थंत्रिपुरप्रज्वलनंकरिष्ये ॥ इतिसंकल्प्य अक्षतपुंजेगणेशंशंभुंचसंपूज्यवेदिकायामष्टदलेताम्रकलशेद्विभुजंहैमंकंदर्पंनाममंत्रेणप्र
तिष्ठाप्य पट्टकूलेनसंछाद्य पंचामृतस्नपनपूर्वकंविष्णुमंत्रेणषोडशोपचारैःपूजयेत् ॥ ततआज्येनतिलतैलेनवात्रिपुरंपूजापुरःसरंप्रज्वा

लयेत् ॥ तत्रमंत्रः ॥ कीटाःपतंगामशकाश्ववृक्षाजलेस्थलेयेविचरंतिजीवाः ॥ दृष्ट्वाप्रदीपंनचजन्मभागिनोभवंतिनित्यंश्वपचाहिविप्राः॥ दीपमंत्रः ॥ आज्येनवर्तिसंयुक्तंत्रिपुरंवह्नियोजितम् ॥ गृह्यकंदर्पदेवेशप्रीतोभवसमाहितः ॥ तदानींतूर्यादिघोषःकर्तव्यः । ततो दह्यमानेत्रिपुरेप्रदक्षिणात्रयंकुर्यात् । ततःआचार्यसंपूज्यकंदर्पमूर्तिंदत्त्वागांचदत्त्वाद्विजेभ्योदक्षिणांदत्त्वावंदिजनांस्तोषयेत् ॥ इतित्रिपुरविधिः ॥ अथव्यासपूजनम् ॥ पाद्मे ॥ आषाढ्यांकार्तिक्यांवाकार्यम् ॥ तिथ्यादिसंकीर्त्य ममेहजन्मनिजन्मांतरेवाचतुर्दशविद्याधिगमसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंव्यासपूजांकरिष्ये ॥ इतिसंकल्प्य गणेशपूजादिविधाय देवालयेमठेवापीठमध्यभागेनारायणस्वरूपिणंव्यासं पूर्वादिषुपैलंवैशंपायनंजैमिनिंसुमंतुंपुरतः शुकं परितःसप्तऋषीन्गुरुंपरमगुरुंपरमेष्ठिगुरुंपरात्परगुरुंचसंपूज्यानंतंकूर्मंपृथिवींपंचोपचारैःसंपूज्य ततोयतीन्कौपीनाच्छादनादिनाप्रपूज्य द्विजेभ्योदक्षिणांदत्त्वाआशिषोगृहीत्वानमेत् ॥ इति श्री० व्रतोद्यापनकौमुद्यांकार्तिकादिमासस्नानोद्यापनध्वजारोपणत्रिपुरदीपनव्यासपूजनविधानानिसमाप्तानि ॥ अथाश्वत्थोद्यापनम् ॥ तदुक्तंशौनकीये ॥ "स्थापनादष्टमेवर्षेद्वादशैकादशेपिवा ॥ उत्तरायणेगुरुशुक्रोदयेमाघफाल्गुनचैत्रवैशाखेषुशुक्लपक्षेशुभेऋक्षेसुवारातिथिलग्नकेस्कंधपर्णांकुरान्वितेविद्युतादावाग्निनावानभिहितेऽश्वत्थोद्यापनंकुर्यात् ॥ तत्रादौ कनककुंडलेकनकसूत्रेकनकमौंजीहोमद्रव्याणिसर्वसंभारान्यथासंभवंसंभृत्य अश्वत्थस्यचतुरस्रांवेदिकांविधायाश्वत्थमूलेवर्तुलंचतुरस्रंवाऽऽलवालंकृत्वा तत्रतुलसींप्लक्षशाखांशमींचरोपयित्वाश्वत्थवेदिकायांचतुरस्रंसमंताच्चतुर्द्वारंचतुर्हस्तमधिकंवामंडपमश्वत्थात्पूर्वपश्चिमेउत्तरेवोक्तलक्षणंमंडपमन्यंवाकृत्वा स्वगृहेज्यो

तिर्विदादिष्टेमुहूर्तेप्रधानसंकल्पंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यात्मनोखिलपापक्षयाभीष्टसिद्धिपूर्वकआत्मनासहैकविंशति
पुरुषानुद्धर्तुकामः श्रीपरमेश्वरप्रीत्यर्थमश्वत्थोद्यापनंतथाऽश्वत्थस्याभीष्टसिद्धिदातृत्वार्थंतदुद्यापनंचकरिष्ये तदंगविहितंगणेशपूजनं
पुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंचकरिष्ये ॥ इतिसंकल्प्य स्वगृह्यविधिनातानिकृत्वाचार्यादीन्वृणुयादस्मिन्कर्म
ण्याचार्यत्वामहंवृणेवृतोस्मीतिवदेत् । एवंब्रह्माणंसदस्यंसुपद्रष्टारंवृत्वासर्वान्मधुपर्कादिनासंपूज्यप्रार्थयेत् ॥ अस्ययागस्यनिष्पत्तौभ
वंतोभ्यर्थितामया ॥ सुप्रसन्नैश्चकर्तव्यंकर्मेदंविधिपूर्वकम् ॥ ततःस्वगृहेएवग्रहमखादिविधाय ततःसर्त्विक्सपत्नीकोयजमानः संपूर्णक
लशहस्तः भद्रंकर्णेभिरितिमंत्रेण मंगलतूर्यघोषेणसहाश्वत्थप्रादक्षिण्येनमंडपपश्चिमद्वारमागत्य तत्रधरांसंपूज्य मंडपंप्रविश्य कलश
मश्वत्थसमीपेनिधाय निर्ऋतिवरुणयोर्मध्येउपविशेत् । ततआचार्यः आचार्यकर्मकरिष्येइतिसंकल्प्य शरीरशुद्ध्यर्थंभूतशुद्ध्या
दिपौरुषजपंचकृत्वा यदत्रसंस्थितमितिसर्षपलाजान्विकीर्य साधितपंचगव्येनकुशैः सर्वत्रप्रोक्षणं शुचीवोहव्येति आपोहिष्ठेतिउत्तरना
रायणेनचकार्यम् ॥ ततो देवाआयांतुयातुधानाअपआयांतुविष्णोदेवयजनंरक्षस्वेतिस्वस्त्ययनंतार्क्ष्यमितिपठेत् । ततोयथोक्तमंडप
करणेमत्कृतरुद्रानुष्ठानकौमुदीस्थप्रकारेणमंडपंपूजयेत् । साधारणमंडपेप्राग्द्वारेअमंत्रकंचूतपल्लवतोरणंदक्षिणेप्लक्षपल्लवतोरणंप
श्चिमेवटपल्लवतोरणमुत्तरेअशोकपल्लवतोरणंबद्ध्वाश्वेतकृष्णहरितरक्तपताकाः अश्वत्थशिरसिचित्रध्वजंचबद्ध्वातथैवप्रागादिद्वारच
तुष्टयेवेदादिक्रमेणद्वौद्वावेकमेकंवाजपार्थंब्राह्मणंवृणुयात् । ततआचार्योऽश्वत्थस्यहरिद्रातैलरोपणादिलौकिकंविधायाश्वत्थवेदिका ॥ ७४ ॥

यामीशान्यप्रदेशेसर्वतोभद्रंविरच्य ब्रह्मादिदेवतास्थापनंकरिष्ये इतिसंकल्प्य उक्तप्रकारेणसंस्थाप्य संपूज्य तदुपर्यक्षतपुंजे मध्यप्रदेशेकृताग्न्युत्तारणसौवर्णप्रतिमायामिदंविष्णुरितिमंत्रेणवासुदेवं तद्वामतः अधस्यायोषणेतिमंत्रेणरुक्मिणीं तद्दक्षिणतः सत्यासत्येतिमंत्रेणसत्यभामां ततःप्रक्षोदसाधायेत्येतिमंत्रेणसरस्वतीम् आतूनइंद्रेतिगणपतिं चावाह्य पौरुषेणसंपूज्य ततोऽश्वत्थपरितःपीठंसमंततोवाअष्टौकलशान्स्थापनप्रकारेणसंस्थाप्य तत्रपूर्वकलशेशुद्धोदकमापोहिष्ठेतिनवर्चेनसूक्तेन द्वितीयेगंधोदकम् आनोभद्रेतिदशर्चेन तृतीयेक्षीरोदकं स्वस्तिनोमिमीतेतिपंचर्चेन चतुर्थेपंचगव्यं शन्नइंद्राग्नीइतिपंचदशर्चेन पंचमेहरिद्रोदकम् एतोन्विन्द्रेतितृचेन षष्ठकलशेसर्वौषध्युदकं समुद्रज्येष्ठाइतिचतसृभिः सप्तमेकुशोदकं यादिव्याइति अष्टमेगंगोदकं प्रसुग्मआपइतिनवर्चेन उक्तप्रकारेणपूर्णपात्रांतंकृत्वातत्रपूर्वादिक्रमेणइंद्रादींस्तत्तन्मंत्रैरावाह्यसंपूजयेत् । ततोश्वत्थंपुरुषसूक्तेनअथर्वशिरसाचसंशोध्य पंचामृताभिषेकंचकृत्वा काषायवस्त्रयुग्मेनचसंवेष्ट्य ततःपूर्वादिदिक्षुचत्वारिस्थंडिलानिविधायतेषुहोमार्थं चतुरआचार्यान्वृत्वातेस्वगृह्यविधिनाग्नीन्स्थापयेयुः ॥ अत्रकेचनईशानपूर्वयोर्मध्येग्रहहोमादिकर्तुंपंचममिच्छंति । बहवःपूर्वकुंडेएवग्रहप्रधानहोमादिकंकुर्वन्ति । पूर्वमकृतग्रहयज्ञेईशान्यांवेदिकायांमत्कृतरुद्रानुष्ठानकौस्तुभस्थप्रकारेणग्रहानावाह्यसंपूज्य अन्वादध्यात् । तत्रपूर्वकुंडेपूर्वकृतग्रहयज्ञे आदित्यादिनवग्रहानमुकसंख्ययार्कादिसमिच्चर्वाज्यद्रव्यैः अधिदेवताप्रत्यधिदेवताश्च अमुकसंख्ययातैरेवद्रव्यैः तथा आनोभद्रेतिमंत्रेणविश्वान्देवान् चरुद्रव्येणाष्टोत्तरशतसंख्यया तथावासुदेवादिपीठदेवताः अश्व

त्थसमिच्चर्वाज्यद्रव्यैः अष्टोत्तरसंख्यया ब्रह्मादिदेवताः इंद्रादिलोकपालांश्चैकैकयाज्याहुत्यायक्ष्ये ॥ पंचमकुंडपक्षेआदौतत्रा ग्निप्रणयनंतस्माच्चतुर्ष्वग्निप्रणयनं तत्रग्रहहोमः । वासुदेवादीनांहोमोब्रह्मादीनांचपूर्वकुंडेविश्वेषांदेवानांलोकपालानांचहोमः । अथद क्षिणकुंडे गणपतिंतिलाज्यद्रव्येणाष्टोत्तरशतसंख्ययायक्ष्ये । पश्चिमे अष्टौलोकेशान्वास्तुंचशमीसमिद्भिरष्टोत्तरशताष्टाविंशति संख्ययावायक्ष्ये । उत्तरेनारायणंपौरुषेणयजुःप्रत्यृचमाज्यद्रव्येणाष्टोत्तरशतसंख्ययायक्ष्ये ॥ एवंतत्तन्मंत्रैर्होमंसंपाद्य स्विष्टकृदादि बल्यंतंकृत्वाऽधिवसेत् । पुराणादिनारात्रिंनिनयेत् केचनकाषायवस्त्रदानांतंकृत्वापरेद्युरेवहोमादिकमिच्छंति ॥ प्रातःपीठदेवताः संपूज्य अष्टकलशदेवताविसृज्य अष्टभिर्ब्राह्मणैस्तान्ग्राहयित्वा आचार्यः पवमानःसुवर्जनइत्यनुवाकेनाश्वत्थं त्रिःपरिषिच्य किंचि दवशिष्टोदकान्कलशान्पूर्वस्थानेषुस्थापयेत् ॥ ततोयजमानः आचार्योवाऽश्वत्थपश्चिमेस्थंडिलेसंस्कारहोमंकुर्यात् ॥ तद्यथा ॥ अश्वत्थस्यपुंसवनादिसमावर्तनांतान्संस्कारान् व्याहृतिद्वाराकरिष्ये इतिसंकल्प्य अग्निंपवमानंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधा नमग्निंवायुंसूर्यंप्रजापतिमाज्यद्रव्येण प्रतिसंस्कारं चतुश्चतुःसंख्याकाहुतिभिर्यक्ष्ये ॥ प्रतिसंस्कारहोमांते वनस्पतेशतवल्शोइति मंत्रेण अश्वत्थंस्पृशेत् एवमुपनयनपर्यंतंकृत्वा यजमानाश्वत्थांतरालेपटंधृत्वा सुमुहूर्तेमंगलाष्टकपाठपुरःसरं तदेवलग्नमितिप ठिते अन्तःपटंनिःसार्य ध्रुवसूक्तंपठित्वा येयज्ञेनेतिवर्गपंचकंशाखांतरस्थमंत्रांश्चपठित्वा कौपीनंयज्ञोपवीतंकनकमयींदर्भमयीं वामेखलांदंडंचतत्तन्मंत्रैर्धृत्वा सप्रणवांसव्याहृतिकांसशिरस्कांगायत्रीमुपदेशवत्पठेत् ॥ इत्युपनयनम् ॥ ततोमहानाम्न्यादिसमावर्त

नांतंकृत्वाकनककुंडलेऽलंकारांश्चदत्त्वाआयुष्यंवर्चस्यमितिपठित्वा मौंजीविसर्जनांतंकृत्वा ममाग्नेइतिसूक्तंपठेत् ॥ ततःस्विष्टकृदा
दिहोमशेषंसमापयेत् ॥ अथविवाहः ॥ तत्रादावश्वत्थालवालेशतकुंभमितंशुद्धजलंक्षिप्त्वा दुग्धमधुघृतकुंभैश्चसिक्त्वावस्त्रयुग्मेन
अश्वत्थतुलस्यादिशाखावेष्टयित्वा तुलस्यैकंचुकींवस्त्रंकंठभूषणंमौक्तिकंकर्णेपादभूषणानिचदत्त्वा अश्वत्थस्यविवाहविधिंकरिष्ये
इतिसंकल्प्य पूर्वसंस्कारहोमस्थंडिलोत्तरप्रदेशेस्थंडिलंनिर्माय योजकनामानमग्निंप्रतिष्ठाप्यान्वादध्यात् । अत्रप्रधानं ब्रह्माणंद्वासु
पर्णेतिमंत्रेणाष्टोत्तरशतसंख्ययातिलाज्यद्रव्येण तथामहाव्याहृतिभिःतिलाज्यद्रव्येणाष्टोत्तरशतसंख्ययायक्ष्ये ॥ महाव्याहृतयस्तु
भूरग्नयेचपृथिव्यैचमहतेचस्वाहा भुवोवायवेचान्तरिक्षायमहतेचस्वाहा सुवरादित्यायचदिवेचमहतेचस्वाहा भूर्भुवःसुवश्चंद्रमसेमहते
चस्वाहा । एवंहोमंकृत्वातुलस्यश्वत्थयोश्चतुरःशाखामयान्हस्तान्गृभ्णामीतिमंत्रेणयोजयेत् । ततःस्विष्टकृदादिहोमशेषंसमा
प्य ततोश्वत्थंपुरुषसूक्तेनषोडशोपचारैःसंपूज्य अश्वत्थंतुलसींचप्रार्थयेत् ॥ अश्वत्थत्वंजगन्नाथःपुरादेवैर्विनिर्मितः ॥ पापात्त्वं
त्राहिनोदेवपुण्यंदेहिमहाफलम् ॥ क्षीरोदधिसमुद्भूतेतुलसीहरिवल्लभे ॥ अश्वत्थोद्यापनंपुण्यंमह्यंदेहिश्रियैनमः ॥ ततआचार्यैः
क्षेत्रपालबलिंदत्त्वा सर्वेआचार्याःस्वकुंडेपूर्णाहुतिंहुत्वाकर्मशेषंसमापयेयुः ततोयजमानःपीठपूजांविधाय कृतस्याश्वत्थोद्यापनस्यसांग
तासिद्ध्यै आचार्यादिभ्योदक्षिणाप्रदानमहंकरिष्ये । पूजापूर्वकंदक्षिणांदत्त्वाततआचार्यादयःपूर्वस्थापिताष्टकलशोदकेनदूर्वापल्लवैः
सपत्नीकंयजमानमभिषिंचेयुः ॥ तत्रमंत्राः ॥ आनोभद्रेतिदशर्चंसूक्तम् अस्यवामस्येतिद्विपंचाशदृचंसूक्तं मुंचामित्वेतिपंचर्चं

सूक्तं समुद्रज्येष्ठाइत्यादयः सुरास्त्वामभिषिंचंत्वित्याद्याः । एवमभिषिक्तोयजमानस्तिलकादिधृत्वाऽग्निंपीठदेवतांचसंपूज्य उत्तिष्ठ
ब्रह्मणस्पतेउत्थाप्य सोपस्करंपीठमाचार्यायदत्त्वा संपूर्णतासिद्ध्येगांचदत्त्वा मंडपंसदस्याय आचार्यायवादत्त्वा भूयसींचदत्त्वाकर्मेश्व
रार्पणंकृत्वा शताधिकान्ब्राह्मणान्संभोज्याशिषोगृहीत्वाश्वत्थोद्यापनसंपूर्णतांवाचयित्वेष्टजनैःसहभुंजीत ॥ एवंयःकुरुतेतस्यवर्धतेश्री
रायुषम्॥कुलकोटीःसमुद्धृत्यविष्णुलोकेमहीयते॥इतिशौनकीयेऽश्वत्थोद्यापनम् ॥ अथवटोद्यापनंभविष्यस्कंदयोः ॥ उदगयनेसुमुहूर्ते
स्थिरलग्नेचंद्रतारकानुकूल्येरम्यप्रदेशेनाभिमात्रगर्तें गृहावैप्रतिष्ठेतिमंत्रेणवटपादपरोपणंकार्यम्॥तद्वदेवसर्वपादपरोपणेरोपणादष्टमेवर्षे
द्वादशेवाशाखापत्रांतरितेउदगयनादिशुभेकालेउद्यापनंकुर्यात्।वटस्यपरितश्चतुर्हस्तांदृढांवेदिकांकृत्वा वटमूलेरम्यंचतुरस्रंवर्तुलंवाऽऽ
लवालंकृत्वातत्र कांडात्कांडादितिदूर्वारोपयेत् । वटपरितश्चतुर्हस्तंपंचहस्तंवासुदृढंचतुर्द्वारंमंडपंकुर्यात् । सामर्थ्येसतिवटात्पूर्वेपार्श्वे
मेउत्तरेवायथोक्तप्रकारेणहवनार्थंनवपंचचतुःकुंडाद्युपेतंमंडपंकुर्यात्। असामर्थ्येतुवटवेदिकायामेव। तत्रप्रागादिद्वारचतुष्टये। आम्रोदुंब
रप्लक्षाशोकपल्लवकृतानिचत्वारितोरणानि । तथाद्वारचतुष्टयेश्वेतकृष्णहरितपीतवर्णाश्चत्वारोध्वजाःपताकाश्चवटशिरसिसर्ववर्णोध्वजः
कार्यः।एवंसंभृतसर्वसंभारोयजमानोज्योतिर्विदादिष्टेशुभेमुहूर्तेप्रधानसंकल्पंकुर्यात्॥ तद्यथा॥ तिथ्यादिसंकीर्त्यात्मनःसकलपापक्षयकु
लकोटिसमुद्धरणैहिकामुष्मिकनिरवधिसुखप्राप्तिपूर्वकब्रह्मपदप्राप्तिकामोवटोद्यापनंतथाभीष्टदातृत्वसिद्ध्यर्थंसर्वप्राणिसुखनिवासार्थंच ॥ ७६ ॥
वटसंस्कारंचकरिष्ये॥इतिसंकल्प्यतदंगविहितंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंकरिष्ये ॥ स्वगृह्य

विधिनातानिकृत्वाचार्यादीन्वृणुयादस्मिन्कर्मण्याचार्यत्वामहंवृणेवृतोस्मीतिवदेत् । एवंब्रह्माणंसदस्यमुपद्रष्टारंचवृत्वामधुपर्कादिना संपूज्यप्रार्थयेत् । अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसन्नैश्चकर्तव्यंकर्मेदंविधिपूर्वकम् ॥ इति । ततःसऋत्विग्यजमानः पूर्णकलशहस्तः मंगलवाद्यतूर्यघोषेणसह शाकुनसूक्तंपठन्वटमंडपप्रादक्षिण्येनपश्चिमद्वारमागत्यतत्र भूमिर्भूम्नाद्यौरितिमंत्रेणधरांसंपूज्यार्घ्यंदत्त्वा प्रविश्य वटसमीपेकलशंनिधाय वरुणनिर्ऋतिमध्येउपविशेत् ॥ ततआचार्यः आचार्यकर्मकरिष्ये ॥ भूतशुद्ध्यादिविधाय मंडपांतः गौरसर्षपलाजान् यदत्रसंस्थितमितिविकीर्य साधितपंचगव्येनकुशैः आपोहिष्ठाइत्यादिमंत्रैःसर्वत्रप्रोक्षणंकृत्वा देवाआयांतुयातुधानाअपयांतुविष्णोदेवयजनंरक्षस्व । ततःस्वस्त्ययनंतार्क्ष्यमितिपठेत् । यथोक्तमंडपेउक्ततोरणपताकाध्वजान्बद्ध्वाशांतिसूक्तजपार्थंवेदादिक्रमेणद्वावेकंवाब्राह्मणंप्रागादिक्रमेणप्रतिद्वारंवृणुयात् । ततआचार्योवटपश्चिमेचतुरस्रांवेदिकांनिर्माय तत्रसर्वतोभद्रेउक्तप्रकारेणब्रह्मादिदेवता आवाह्य तदुपरिअक्षतपुंजेकलशत्रयंप्रतिष्ठाप्यैकंवातत्रमध्यमकुंभे ब्रह्मजज्ञानमितिब्रह्माणं तद्दक्षिणेवषट्तेविष्णवितिविष्णुम् उत्तरेत्र्यंबकमितिरुद्रम् आग्नेयादिकोणेषुगणानांत्वेतिगणपतिं जातवेदसमितिदुर्गां जज्ञानमितिमातॄः क्षेत्रस्यपते इतिक्षेत्रपालं ततःपरितोलोकेशान् तत्तन्मंत्रैरावाह्य संपूज्य वेदीपरितोष्टौकलशान्स्थापनप्रकारेणसंस्थाप्य तत्रपूर्वादिकलशेषुपंचगव्यंसप्तमृदःपंचपल्लवान् चंदनंपंचरत्नानिक्षीरंसर्वौषध्योगंगोदकमेवंक्षिप्त्वा शुद्धजलेनापूर्यपूर्णपात्रंनिधाय तेष्विंद्रादीनावाह्यसंपूजयेत् ततोहरिद्रातैलरोपणादिवटस्यकृत्वा वस्त्रेणवेष्टयेत्॥ इत्यधिवासनम्॥परेद्युःप्रातर्नित्य कर्मनिर्वर्त्य पीठदेवताःसंपूज्य प्रागादिद्वारचतुष्टयेचतुरःकुंभान्संस्थाप्य तेषुउदकंपंचरत्नपल्लवादिचनिधाय इंद्रयमवरुणसोमान् तत्तन्मंत्रैरावाह्यसंपूज्य चतुर्द्वारेषुचतुर्वेदविदोद्विजाः

शांतिसूक्तानिपठेयुः । ततईशान्यांकुंडेस्थंडिलेवाअग्निंप्रतिष्ठाप्य तदुत्तरे वेदिकायामुक्तप्रकारेणग्रहानावाह्यसंपूज्य तदैशान्यांकलशंप्र
तिष्ठाप्य जपार्थंब्राह्मणंवृणुयात् । ततःप्रागाद्याचार्याश्चत्वारःस्वस्वकुंडेस्वगृह्यविधिनाआचार्यकुंडाच्छ्रोत्रियागाराद्वाऽग्नीन्प्रणीयध्याये
युः ॥ कुंडचतुष्टयपक्षे प्राक्कुंडादग्निप्रणयनंतत्रैवमुख्यहोमः ॥ अथान्वाधानम् ॥ तत्रेशानकुंडेब्रह्मविष्णुरुद्रान् घृताक्तदूर्वाज्यद्रव्ये
णाष्टोत्तरशतमिताहुतिभिर्यक्ष्ये । इंद्राद्यष्टौलोकपालान्पलाशसमिच्चर्वाज्यद्रव्यैःअष्टाविंशतिसंख्ययायक्ष्ये । दक्षिणेगणपतिंदुर्गांसप्तमा
तृःक्षेत्रपालं घृताक्ततिलद्रव्येणाष्टाविंशत्याहुतिभिर्यक्ष्ये । पश्चिमेसाधिप्रत्यधिदेवतानादित्यादिनवग्रहानर्कादिसमिच्चर्वाज्यतिलव्रीहि
द्रव्यैः अष्टाविंशतिसंख्याकाहुतिभिर्यक्ष्ये । उत्तरेसोमं सोमोधेनुमितिमंत्रेणघृताक्तचरुप्लक्षसमिद्रव्येण अष्टोत्तरशतमिताहुतिभिः ब्र
ह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये । एवंतत्तन्मंत्रैःहोमंसंपाद्य ततःआचार्योवटस्यहरिद्रातैलादिदत्त्वा पंचोपचारैःसंपूज्य पूर्वस्था
पिताष्टकलशान्ब्राह्मणान्ग्राहयित्वाच आपोहिष्ठा० समुद्रज्येष्ठा० इमाआपः० एतोन्विंद्रमितिप्रत्येकंजपन्वटस्याभिषेकंकुर्यात् । तत
आचार्यः प्रतीच्यांहोमसंस्कारार्थंस्थंडिलंनिर्माय संकल्पयेत् । वटस्यपुंसवनादिविवाहांतान्संस्कारान्व्याहृतिद्वाराकरिष्ये । अग्निंप्र
तिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम् अग्निंवायुंसूर्यंप्रजापतिमाज्यद्रव्येण प्रतिसंस्कारं चतुःसंख्याहुतिभिर्यक्ष्ये । प्रतिसंस्कार
होमांते वनस्पतेशतवल्शइतिमंत्रेणवटंस्पृशेत् । एवमुपनयनपर्यंतंहुत्वा यजमानोवटांतरालेपटंधृत्वा सुमुहूर्तंतदेवलग्नमितिपठिते
अंतःपटंनिःसार्य ध्रुवसूक्तंयेयज्ञेनेतिपठित्वा कौपीनयज्ञोपवीतंमेखलांदण्डंचतत्तन्मंत्रैर्दत्त्वा उपदेशवद्गायत्रीं श्रावयित्वानमेत् ॥ इ
त्युपनयनम् ॥ ततोमहानाम्न्यादिसमावर्तनांतंकर्मकृत्वाऽलंकारान्दत्त्वा आयुष्यंवर्चस्वमितिपठित्वामौंजींविसर्जयेत् ॥ ततोवटं

दूर्वांचदुग्धादिनासिक्त्वा वटंदूर्वांवस्त्रयुग्मेनसंवेष्टय वस्त्रंकंचुकीमाभरणादिदत्त्वा पूर्ववद्धुत्वा गृभ्णामीतिमंत्रेणवटदूर्वयोःपल्लवमया न्हस्तान्योजयेत् ॥ ततःसंस्कारसंबंधिस्विष्टकृदादिहोमशेषंसमाप्य वटंपुरुषसूक्तेनसंपूज्यप्रार्थयेत् । आदितोब्रह्मरूपायमध्यतोवि ष्णुरूपिणे ॥ अग्रतोरुद्ररूपायवटवृक्षायतेनमः ॥ अकारमूलरूपायउकारस्कंधशाखिने ॥ मकारफलपुष्पायवटवृक्षायतेनमः ॥ ततआचार्याः स्वस्वकुंडेस्विष्टकृदादिहुत्वा बलिपूर्णाहुतिंचकृत्वा यजमानोवटोद्यापनसांगतासिद्ध्येदक्षिणांगांचदास्ये इतिसंकल्प्य क्रमेणदत्त्वा ततऋत्विजःकलशोदकैः यजमानं समुद्रज्येष्ठाइत्यादिमंत्रैरभिषिच्य कर्मशेषंसमापयेयुः ॥ ततोयजमानःपीठदेवताः संपूज्य उत्तिष्ठब्रह्मणस्पतइतिउत्थाप्य यांतुदेवगणाःसर्वेइतिविसृज्य पीठादिआचार्यायदत्त्वा मंडपंसदस्यायदत्त्वा भूयसींदत्त्वाशताधि कान्ब्राह्मणान्भोजयित्वा सदन्नेनसंभोज्य आशिषोगृहीत्वा वटोद्यापनपूर्णतांवाचयित्वा इष्टजनैःसहभुंजीत ॥ इतिअश्वत्थवटोद्यापने ॥ इतिश्रीमच्चित्तपावनकुलाब्धिसंभवघारेइत्युपनामकबल्लाळसूरिसूनुशंकरविरचिता व्रतोद्यापनकौमुदी समाप्ता ॥ समाप्तोऽयंग्रंथः ॥ ॥

इदं पुस्तकं श्रीकृष्णदासात्मजेन खेमराजश्रेष्ठिना मुम्बय्यां स्वकीये
"श्रीवेङ्कटेश्वराख्य" मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।
शकाब्दाः १८१७, संवदब्दाः १९५२, सन्संज्ञकाब्दाः १८९५.

